 

वर्षेऽयोमखनंदभूपरिमिते १९०० चाषाढमासे दले ।
कृष्णे ब्रह्मतिथौ नरेंद्रभिषजां श्रीविठ्ठलाख्याजुषाम् ॥
गेहे सूर्यकुमारिकाख्यजननीसंजातजन्मोत्सवा ।
पित्रोः पादयुगाब्जभक्तिनिरता बाल्येप्यभूवंश्च ये ॥ १ ॥
पूज्यश्रीपितृभक्तिकल्पलतिकासेवाप्तभाग्योदयाः ।
श्रीमत्केशवदेशिकेशकरुणासंप्राप्तविद्योदयाः ॥
आयुर्वेदमहासुधांबुधितलस्पर्शिप्रसन्नाशयाः ।
श्रीगौरीशपदाब्जयुग्मविलसच्चेतोमिलिंदाश्च ये ॥ २ ॥
सौजन्यामृतसिंधवः सरलतासौहार्दहार्दाश्रया ।
औदार्यप्रणयालयाः स्वजनतावात्सल्यवश्याशयाः ॥
सद्विद्याविनयादयार्द्रहृदयाः सन्मित्रधर्माश्रया ।
यावज्जीवसुमासहायपरमाधारा अभूवंश्च ये ॥ ३ ॥
वर्षे मुन्यसुनंदभू१९५७परिमिते मासेत्र हा ! कार्तिके ।
शुक्लानंततिथौ निशींदुदिवसे ते श्रीजटाशंकराः ॥
आयुर्वेदसुधाकराः सुजनतासारल्यरत्नाकराः ।
सौहार्दैकधुरंधराः शिवपदं प्राप्ताः शिवैकाश्रयाः ॥ ४ ॥
हा ! सौहार्दसुधानिधिर्निरवधिः शुष्कः समग्रोऽधुना ।
तत्सौजन्यमनन्यतुल्यममलं मन्ये निरालंबनम् ॥
हा ! तन्निष्प्रातिमं निराश्रयतया सारल्यमस्तं गतम् ।

 

प्राप्ते श्रीशिवमंदिरं शिवपरे वैद्ये जटाशंकरे ॥ ५ ॥
ज्येष्ठभ्रातृषु तातभक्तिभरभाङ् नान्यो नरो दृश्यते ।
हा! स्वीयेष्वनुजेषु पुत्रसमधीर्धीरश्च नैतादृशः ॥
सन्मित्रेषु च सोदराधिकतमप्रेमप्रकाश्यास्ति कः ।
प्राप्ते श्रीशिवमंदिरं शिवपरे श्रीमज्जटाशंकरे ॥ ६ ॥
झंडूभट्टपरस्वरूपमधुनाऽमुं श्रीजटाशंकरं ।
श्रुत्वा हा! विधिनाकृतं किमिदमित्याक्रंदिताऽरोऽखिलाः ॥
रोगार्ताः करुणामये च परमौदार्याश्रये स्वाश्रये ।
प्राप्ते श्रीशिवमंदिरं शिवपरे वैद्ये जटाशंकरे ॥ ७ ॥
मातापित्रोश्चरणकमलद्वंद्वभक्तिर्विशुद्धा ।
सा सा श्रीमद्गुरुवरपदांभोजभक्तिश्च नित्या ॥
भ्रातृप्रेमप्रसरपरता निस्तुला सा समाप्ता ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ ८ ॥
झंडूभट्टं परमकरुणासिंधुमौदार्यमूर्तिं ।
धैर्यस्थैर्याश्रयमुपहृतं चाद्यलोकः सशोकः ॥
चंदूलालं निजकुलमणिं मंस्यते चाद्यनष्टं ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ ९ ॥
सद्बंधूनां निरुपमतमप्रेमपीयूषपात्रं ।
भग्नं भग्ना परमविमला मित्रधर्मस्य मूर्तिः ॥

सर्वस्वं मे लयमुपगतं चार्थिनामाश्रयोपि ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १० ॥
सन्मित्राणां परमममलं मित्ररत्नं त्वमूल्यं ।
कालस्तेनोऽहरदतिबलो निर्बलानां बलान्नः ॥
वात्सल्यं तन्निजजनगतं निर्निमित्तं प्रणष्टं ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ ११ ॥
मातापित्रोः सहजसुहृदां स्नेहसारः समग्रो ।
यस्मिन्नंतर्भवति नितरां निर्मलः सोयमद्य ॥
मैत्रीधर्मो लयमुपगतो मित्रचिंतामणीषु ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १२ ॥
क्व श्रोतास्मो मृदुलमधुरां सस्मितां स्नेहसांद्रां ।
वाचं स्वल्पाक्षरमणिमयीं चार्थगांभीर्ययुक्ताम् ॥
दैवादद्य प्रणयनिलयेष्वार्यवैद्याग्रगेषु ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १३ ॥
कस्मिंश्चिता विविधविषया न्यस्य सर्वा अचिंतं ।
कस्मिन् दुःखं हृदय! सदये न्यस्य भूया अदुःखम् ॥
हा! दैवात्ते प्रातिनिधिवरेष्वद्य सन्मित्ररत्ने-।
ष्वाप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १४ ॥
उपरतमतुलं तद्भ्रातृवात्सल्यमद्य ।

 

प्रलयमुपगतं तच्चेतसो निर्मलत्वम् ॥
विरतिमुपगता सोदारताऽनन्यतुल्या ।
शिवपदमुपयाते श्रीजटाशंकरार्ये ॥ १५ ॥
आयुर्वेदामृतनिधितलस्पर्शिता साऽद्यनष्टा ।
सद्विद्या सद्विनयसहिता सुज्ञता सा समाप्ता ॥
काव्यज्ञत्वं तदपि गलितं सौहृदं तच्च नष्टं ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १६ ॥
कीर्तिस्तंभः सकलसुखकृद्वैद्यविद्याधिदेव्या ।
भग्नो हा! हा नयनसुखदो जंगमः कोप्यकस्मात् ॥
नौकादंडोपिच निपतितः सच्चिकित्सैकनावः ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १७ ॥
सद्विद्याश्रीसरसकरुणालोकपीयूषपात्रं ।
भग्नं शीर्णः स्वजनममताकल्पवल्ल्यालवालः ॥
आपन्मित्रं सकलसुहृदां हा! पवित्रं प्रणष्टं ।
प्राप्तेषु श्रीस्मरहरपदं श्रीजटाशंकरेषु ॥ १८ ॥
स्मारं स्मारं शुभगुणगणान् हा! तदीयाननेकान् ।
तद्विश्लेषे क्षणमपि धृतिं नैव धत्ते मनो मे ॥
व्यर्थं सर्वं विलपनशतं चेति चित्ते नितांतं ।
मत्वा नत्वा प्रतिदिनमिदं प्रार्थये श्रीमहेशम् ॥ १९ ॥

तैस्तैः सर्वैः सहजसुगुणैस्तुष्टचित्तः परेशः ।
श्रीगौरीशः सदयहृदयः श्रीजटाशंकरेभ्यः ॥
सामीप्याख्यां वितरतु महामुक्तिमानंदपूर्णां ।
युष्माकं च प्रतिदिनमयं शंकरः शं करोतु ॥२०॥
मुनिशरनंदक्ष्मामित १९५७ वर्षीये कार्त्तिकेमासे ।
कृष्णदले सप्तम्यां भौमे लिखितं विषादपत्रमिदम् ॥२१॥

---

## भट्टश्रीमत्प्रेमशंकरात्मज-प्राणशंकरशास्त्रि कृता कविता.

यस्मिन् श्री करुणादिशंकरगुणाः सर्वेऽवसन्निर्मला ।
स्तत्पुत्रे निजचंदुलालधिषणो योयः स्वबंधुप्रियः ॥
मित्रस्नेहसुधाकरः सहृदयः सौजन्यरत्नाकरः ।
सोयं हंत गतोधुना शिवपदं श्रीमान्जटाशंकरः ॥ १ ॥
बहवो भिषजस्तथाप्यहो विरलो मित्र भवादृशो भिषक् ॥
अधुना प्रबला महागदा-स्त्वयि याते शिवमंदिरं सखे॥२॥
भिषजः कति संति नावनौ विदितायुर्निगमागमाशयाः ॥
विरलो भवता समो भिषङ् निजपुत्रीकृतरोगिमंडलः ॥३॥
करुणाशिवचंदुलालयोः शिवलोके भविता समागमः ॥
परिपूज्य तदन्वितः शिवं स्वकुलैक्याभ्युदयौ समर्थये:॥४॥

बहवस्तवसंति सेवका रसशाले सुखिनोऽत्र संतु ते ॥
न परं तु जटाशिवोपमस्तव भक्तो भवितास्ति चाभवत्॥५॥
स सदा शिवमंदिरं गतस्तवमन्येऽभ्युदयाभिवृद्धये ॥
करुणावरुणालयाशयं प्रणयात्प्रार्थयितुं महेश्वरम् ॥ ६ ॥
ऋणभारमपाकरिष्यति त्वरया ते परयाऽमुनार्थितः ॥
ध्रुवमेव सदा सदाशिवः प्रणतप्रार्थितपूरपूरकः ॥ ७ ॥
बहवः किल संति संतु ते भिषजोऽथापि जटादिशंकरे ॥
शिवलोकमुपागतेधुनाऽनवलंबैवभिषक्क्रियांगना ॥ ८ ॥
कवितां मधुरां सुकोमलामवलोक्यार्द्रहृदश्रुलोचनः ॥
नवनीतसुकोमलाशयं भविता कोद्य विना जटाशिवम्॥९॥
अयि शंकरलालसद्गुरो सुगुणैः स्वैरतुलैर्भवत्सखा ॥
शिवशांतिमुपैतु शाश्वतीं शिवलोके शिवयोर्दयादृशा॥१०॥

सं० १९९७ कार्तिके वदि १३ भौमे लिखितम्.

श्रीप्रेमशंकरात्मज प्राणशंकरस्य

प्रणतयः समुल्लसंतु.

 

## श्रीजटाशङ्करविरहजन्य–शोकोद्गारपद्यानि

## शास्त्रि हाथीभाईपत्रतः

जगन्ति सर्वाण्यपि नश्वराणि ।
प्रत्यागतिक्लेशयुजोऽपि लोकाः ॥
ब्राह्मादयस्तानतिशेतुमेषि ।
लोकं जटाशङ्कर! चन्द्रमौलेः ॥ १ ॥

पूर्वं प्रयातमनुसर्तुमथाग्रजं स्वं ।
तं झण्डुभट्टपदवाच्यमुदारभावम् ॥
सद्यो विहाय सुहृदां प्रणयप्रबन्धं ।
यातोऽसि शाम्भवपदं त्वरया जटेश! ॥२॥

आयुर्वेदरहस्यवित्त्वमखिलं नीतं त्वयाऽनाथताम्।
साहित्याब्धिविलोडनैकरसिकत्वेनैव साकं सखे!
लोकेऽस्मिन्नपहाय बान्धवजनप्रेमप्रबन्धानहो ॥
श्रीकैलासनिकेतनं श्रितवताऽत्युच्चैर्जटाशंकर! ३

किमिति वयमतीव क्लेशभारं वहामो ।
गतवति सुहृदि त्वय्युत्तमं शम्भुलोकम् ॥
इति तु समुचितं नः प्रार्थनं शैलपुत्री– ।
पतिरुपदिशतु त्वन्मुक्तये स्वात्मबोधम् ॥४॥

तथाऽस्तु.

# अथ पात्रसंवर्गणम् ।



सूत्रधारः–मुख्यनाटकाचार्यः
नटी–सूत्रधारगृहिणी.
सरस्वती–भारतीदेवी.
पान्थाः–मथुरानिवासिनो यादवाख्यवराः
वसुदेवः–श्रीकृष्णस्य पिता.
देवकी–श्रीकृष्णस्य जननी.
कीर्त्तिमत्प्रभृतयः षट्–श्रीकृष्णस्याग्रजा भ्रातरः
दासी–देवक्याःपरिचारिका चारुमती.
ब्राह्मण्यौ–सरस्वतीभारतभूम्यौ.
कंसः–श्रीकृष्णस्य मातुलः मथुराधिपतिः
केशी–कंसस्यामात्यः
दुर्मुखः–कंसस्य दूतः
उग्रसेनः–कंसस्य पिता.
प्रतिहारी–उग्रसेनस्य दासी.
द्वारपालः–उग्रसेनस्य द्वाररक्षाधिकृतः
पूतना–कपटेन लक्ष्मीवेशधरा कंसाज्ञाकरी बकासुरस्य स्त्री बकी.
ब्राह्मणः–ब्राह्मणवेशधरो बकासुरः कंसानुचरः
श्रीनारायणः–विष्णुः
मायालक्ष्मीः–पूतनैव लक्ष्मीवेशधरा.
महालक्ष्मीः–श्रीनारायणदयिता.

॥ गर्भांके पात्राणि. ॥

सूत्रधारः–नाटकाचार्यः
नटी–सूत्रधारगेहिनी.

 

शैब्या—महीजिद्राज्ञो महिषी.
महीजित्—औत्तराहो महाराजः
जयसेनः—जयसेना—महीजितः पुत्रः पुत्री च.
द्वारपालः—महीजितो द्वाररक्षकः
अर्थनिधिः—महीजितोऽमात्यः
अनर्थनिधिः—तस्यैव पूर्वोऽमात्यापसदः
यमः—धर्मराजः
चित्रगुप्तः—तस्यामात्यः
वक्रतुण्डः—यमदूतः
पापिनः—पञ्च पुरुषाः पञ्च स्त्रियः
धीवराः—यमुनायां मत्स्यग्राहिणस्त्रयवराः किराताः
मुनिः—जालागत श्च्यवनः
नहुषः—मथुराधिपती राजा.
गाविजातः—तस्य पुरोहितः
दौवारिकः—कंसस्य कारागाररक्षकः
सर्वे दैत्याः—बकासुरादयः सप्त.
नारदः—देवमुनिः
अक्रूरः—श्रीकृष्णस्य पितृव्यको यादवः
रामः—बलभद्रः—श्रीकृष्णाग्रजः
चन्द्रभागा—विशाखा—गोप्यौ.
श्रीदामा—श्रीकृष्णस्य सखा गोपः

॥ गर्भाङ्कपात्राणि. ॥

सूत्रधारः—नाटकाचार्यः

नटी—तस्य भार्या.

स्त्रियः—नर्मदाप्रमुखा गोत्रिरात्रव्रतचारिण्यो गवानुगाः भामिन्यः

गोपाः—त्र्यवराः

गोप्यः—त्र्यवराः

नन्दः—महागोपः श्रीकृष्णस्य पालयिता व्रजेश्वरः

यशोदा—तस्य भार्या.

नर्मदा—ब्राह्मणी दयाशङ्करस्य पत्नी.

कालचण्डः—गोघाती व्याधः कालयवनानुचरः

कर्कशा—तस्य गेहिनी.

किंकराः—कालचण्डानुचराः

दूतः—कालचण्डस्यादेशहरः

राधा—श्रीकृष्णस्यापरमिवहृदयं गोपी.

कालयवनः—यवनाधिपती राजा. (तन्मन्त्रिणश्च. )

शम्भुशर्मा—नर्मदायाः पिता.<br>शिवशर्मा—नर्मदायाः श्वशुरः } तयोः पत्न्यौ च.

दयाशङ्करः—नर्मदायाः पतिः

पौराः—कालयवनराजधानीनिवासिनो जना दशावराः

किङ्करः—कालचण्डस्य सेवकः

रोहिणी—बलभद्रस्य जननी.

चाणूरः—कंससेवको मल्लः

अस्तिः—प्राप्तिः—कंसस्य राज्ञ्यौ.

गोरक्षा—सकलमनोरथपूरणी उपास्यदेवता आर्यावर्तस्य.

॥ श्रीगणेशाय नमः ॥

॥ श्रीगजाननाय नमः ॥ श्रीसरस्वत्यै नमः ॥

॥ श्रीसद्गुरुभ्यो नमः ॥

# श्रीगोपालचिन्तामणि नाटकं

विश्वेश्वरोपि भगवान् परमेश्वरोपि ।
प्रेम्णा स्वयं पशुपतित्वमलंचकार ॥
यः स्वीयभक्तजनवत्सल आर्त्तबंधुः ।
श्रेयःश्रियं दिशतु नः स दयामयात्मा. ॥ १ ॥
अचिंतितमहासंपत्समर्पणपरायणम् ॥
गोसंरक्षणसच्चितामणिं श्रेयःश्रिये श्रये. ॥ २ ॥
अमंदानंदसंदोहदोहपीयूषवर्षिणी ॥
धेनुरक्षाकामधेनुः कामग्रामप्रपूरणी. ॥ ३ ॥
संकल्पसिद्धीराकल्पं कल्पयत्वनुवासरं ॥
गोसंरक्षणसंकल्पकल्पद्रुम इलातले. ॥ ४ ॥
सत्का क्षीरनिधिं निधिं गुरुगिरां शेषं स्वतल्पीकृतं ।
स्वल्पीभूतसुरासुरोरगवधूरूपश्रियं च श्रियं ॥

यो गोपालकबालकस्तमभजद्गोपालनप्रेमतः ।
स श्रीमान् श्रियमातनोतु सततं गोपालचिंतामणिः ॥८॥

( नान्द्यन्ते )

सूत्रधारः—अलमतिविस्तरेण आज्ञप्तोऽस्मि श्रीयदुकुलैकरवकैरवबंधोर्धीरवीरधुरीणस्य सकलसद्गुणरत्नरत्नाकरस्य महाराजश्रीरवाजिराजस्य परमपवित्रचरित्राया मातुः श्रीमोंघीबायाश्च ज्येष्ठश्रेष्ठपुत्रेण श्रीमोरवीत्यपरपर्याय मयूरध्वजपुरपुरंदरेण प्रबलप्रतापतापतापितारिव्रातेन महाराजश्रीव्याघ्रजिता गोपालचिंतामणिविजयाभिधानं रूपकमभिनेतव्यमिति तद्गृहे गत्वा गृहिणीमाहूयामि ( इत्युक्त्वा परिक्रम्य च ) प्रिये ! इतस्तावत्

( प्रविश्य )

नटी—एषास्मि प्राणनाथ किमाज्ञापयसि.

सूत्रधारः—प्रिये धीरवीरगभीरतरनरपतिनिकराग्रसरेण केसी. आई.ई. इत्युपाधिधारिणा महाराजश्रीव्याघ्रजिता नरपालेनाज्ञप्तैरस्माभिरद्य महाराजश्रीरवाजिराजपाठशालाध्यक्षेण दिगंतविख्यातसत्कीर्तिकल्पलताप्रतानानां सद्गुरुवर्यश्रीकेशवशास्त्रिणां कृपापात्रेण महामाहेश्वरभट्टमाहेश्वरतनुजनुषा शंकरलालेन प्रणीतं गोपालचिंता-

मणिविजयापरपर्यायं गोरक्षाभ्युदयं नाम नाटकमभिनेतव्यमतो गीयतां प्रसंगानुरूपम्.

नटी—यथाज्ञार्यपुत्रस्य. (इति गायति.)

नानारसप्रदानैः सकलजगत्पोषिणी रम्या ॥
गौरिव हेमंतश्रीः कस्य न वंद्या च सेव्या च.॥६॥

सूत्रधारः—प्रिये सम्यक् संगीतेन रंजितानि सभ्यजनानां मनांसि भवत्या परं कथमद्यापि नोपक्रमंते शैलूषाः

नटी—आर्यपुत्र विदितपूर्वमेवार्यपुत्रस्यैतद्यत्सभायामेकमप्यक्षरं वक्तुं वहु विचारयंति विज्ञाइति. यतः

चित्तहारिचतुष्पादाश्चतुर्वर्गफलप्रदाः ॥
नानारसदुघा गावोप्येताः पीड्यंत उद्धतैः ॥७॥

सूत्रधारः—प्रिये नायमपराधस्तेषां किंत्वीर्ष्यावेशाविवशाशयायास्तेषां मतेरेव। मतिमालिन्यमुन्मूलयितुं च मरालवाहनैव प्रभवति ततस्तामेव स्मरावः

नटी—नाथ यथाज्ञा नाथस्य (इत्युक्त्वा स्मरणं नाटयति)

(सूत्रधारोऽपि स्मरणं नाटयति.)

नेपथ्ये—केन स्मृतास्म्यचलयामलया च भक्त्या।
हृद्याः क इच्छति नरो निरवद्यविद्याः॥
मालिन्यमात्मगतमिच्छति को विहातुं।

ब्रूताद्य पद्मभवसद्मत आगताहम्. ॥ ८ ॥

( नेपथ्याभिमुखमवलोक्य साश्चर्यानंदं )

सूत्रधारः—प्रिये स्मृतिमात्रसाध्यसान्निध्या भगवती भारती भूषयति नाट्यमंडपं तदेहि प्रार्थयावस्ताम्.

वीणापुस्तकधारिणी मणिमयालंकृत्यलंकारिणी।
जाड्यध्वांतनिवारिणी जनमनःसंतापसंहारिणी
ब्रह्मानंदविचारिणी स्वजनतासर्वापदुत्सारिणी
प्राप्तैवात्र सरस्वती भगवती विद्वत्त्वविस्तारिणी.

तदेहि कृतार्थयाव आत्मानं भगवत्या दर्शनेन (इत्युक्त्वा समीपमुपेत्योभौ प्रणमतः)

( प्रविश्य )

सरस्वती—वत्सौ दंपती युवां पूर्णाभिलाषौ भूयास्तं किमर्थं मम स्मरणं युवाभ्यां विहितं निवेद्यताम्.

सूत्रधारः—मातरीर्ष्यावेशविवशाशया दयालेशविहीनाः पापपीनाः कामदुघा अपि गाः स्वकपोलकल्पितदोषारोपैः पीडयंति तदेषामतिभूमिकामाधिरूढमपि मतिमूढतामालिन्यं मूलत उन्मूलयेसभ्यर्थना नौ.

सरस्वती—( सरोषावेशं ) आः किं कामदुघाअपि पापैः पीड्यंते ? तर्हि विश्वमपि पीड्यते तैर्यतोविश्वाविश्वंभरा-

धारभूता हि गावः

गोमूलमेव किल भारतवर्षजानां ।
सत्पुत्रपौत्रधनधामधरादिकं यत् ॥
सर्वस्वमेतदखिलं तत एव तासां ।
संरक्षणं भरतभूपरिरक्षणं स्यात् ॥ १० ॥

जगदंबा अपि ताः के पीडयंति के च स्वयमेव स्वीयमश्रेयः समुपार्जयितुमिच्छन्ति. (इति वदंती परितः परिभ्रमति.)

सूत्रधारः—(साश्चर्यं) प्रिये वाणीविषयोपि मदुक्तो गोशब्दो जगन्मातुः सरस्वत्या मनसि धेनुविषयत्वेन प्रतिफलितस्ततश्च सा धेनुपीडनपरेषु पामरेषु नरेषु रोषावेशविवशेव प्रतिभाति । भवतु तदपि प्रियं नः । श्रूयते खलु मथुरामहाराजस्योग्रसेनस्य युवराजेनासुरनिकरसंसर्गाद्रचितधर्मध्वंसेन कंसेन गोब्राह्मणोन्मूलनायाज्ञप्ता अनेके निशाचरा नराकृतयः परिभ्रमंतीति ततस्तेषामपि मतिमालिन्यं भगवत्युन्मूलयिष्यतीति परमं प्रियं नस्तदेतदनंतरकरणीयाय सज्जीभवावः

(इत्युक्त्वा निष्क्रांतः सूत्रधारः सह नट्या.)

सरस्वती—(सविषादावेगं) हा वत्से भारतभूमिके क्वासि

देहि मे दर्शनं देहि मे प्रतिवचनं च ( प्रविश्य. )

**भारतभूमिः**–( सास्त्रं ) मातर्मरालवालवाहने भगवत्साश्च-रणकमलयुगलविलीनामेवमामभिषिंच करुणामृततरंग परंपराभिः

**सरस्वती**–( विलोक्य साश्चर्यविषादं. )

पुरा हतमहासुरावतरनीचकर्मस्फुर-
न्नराधमभरानता कृशतरा धृतार्तिज्वरा ॥
अविश्रमलवं गलन्नयननीरधाराकुला ।
कुलावनिरियं रुदत्यहह भारतक्ष्माभुजाम् ॥१.१॥

( क्षणं निरीक्ष्य ) हा वत्से भारतभूमिके कोयं दशाविप-र्यासस्ते.

यत्रासन्नहहापुरावनिसुरा गोभक्तिभाजोखिला।
गोसंरक्षणलक्षणक्षणधराः सर्वे धराधीश्वराः ॥
वैश्या गोधनसज्जनास्तदितरे गोसेवकाः साधुना
गोपीडैकपरैर्नरैः परिवृता हेभारतक्ष्मेऽसि हा।१२

**भारतभूमिः**–( सास्त्रं ) मातर्न केवलं गोपीडापरैः किंतु गोहिंसापरैरपि नरपिशाचनिकरैः परिवृतैषा मंदभागि-नीति मंतव्यं भगवत्या.

**सरस्वती**–वत्से गोहिंसापरैरपि नरैः परिवृतास्मीत्युक्त-

वत्सा भवसान्यदपि भयं मन्मनस्युत्पादितं । किं नास्ति लोके सकललोकश्रेयस्करी देवी सर्वभूतदया. ?

भारतभूमिः–(सनिःश्वासं) हा क्वाधुना सर्वभूतदयाया वार्तापि सा तु कृतयुगमहाराजेन सहैव तद्विरहासहेव स्वर्लोकमलंचकार.

सरस्वती–(सखेदं.)

न हा भाव्यं शांत्या न च जगति दांत्यापि परया।
न पुष्ट्या संतुष्ट्या हरहर विना भूतदयया ॥
अभावेचैतासां कथमिव दयार्द्रः स च दया– ।
सुधासिंधुः श्रीशो वद वद मनुष्येषु भविता. १३

वत्से सर्वभूतदयायाः परमेश्वरप्रसादपात्रतासाधनसाम्राज्यसिंहासनं कयालंकृतं. ?

भारतभूमिः–मातः सर्वभूतदयायाः पवित्रचरित्रा पुत्री स्वमातुः सिंहासनमहिंसैव समलंकृतवती.

सरस्वती–प्रियं नः प्रियं नस्ततस्ततः

भारतभूमिः–ततश्च तया त्रेतासमारंभादारभ्य द्वापरपर्य्यवसानपर्यंतमनुभूतं स्वकीयसाम्राज्यसुखं बहवो देवा दानवा मानवाश्च तया परमेश्वरप्रसादपीयूषपात्रतां नीताः . . . . . . . . .

सरस्वती–युज्यत एवैतत् सर्वभूतदयाया दुहितुरहिंसायास्ततस्ततः

भारतभूमिः–ततश्च करालकलिकालसमागमनसमयंसमवलोक्य जराजर्जरतया तया बालामपि निजां पुत्रीं गोरक्षां जगद्रक्षां विधातुं स्वकीयसाम्राज्यसिंहासने समभिषिच्य द्वापरेण सहैव निजलोकगमनमंगीकृतम्.

सरस्वती–हा वत्से! इदानीमहिंसयापि त्वं परित्यक्तासि किम्?

भारतभूमिः–अथ किम्.

सरस्वती–निजपदमुपयाता चेदहिंसाद्य हिंसा।
प्रभवति जगति स्वं हा प्रभावं प्रकाशम्॥
द्रुततरमुपनेतुं हंत धर्मोप्यधर्म-।
प्रबलबलपरास्तः कुत्र गंता न जाने.॥१४॥

भारतभूमिः–मातर्यच्छंकसे तत्सर्वं संपन्नप्रायं भगवत्या अहिंसायाः परलोकप्रयाणसमय एव हिंसया स्वयं स्वकीय विजययात्राप्रयाणशुभमुहूर्त्ततां नीतः प्रबलवत्तया च तया स्वल्पेनैवानेहसा सकलमपि दिक्चक्रवालं स्ववशंवदतामुपनीतम्.

सरस्वती–वत्से वत्साया गोरक्षाया इदानीं का प्रवृत्तिः?

भारतभूमिः—मातः श्रुतं मया कर्णपरंपरया किल गोरक्षा तु हिंसाया निःश्टृंखलं परितः प्रसारं समीक्ष्य पुण्यारण्यशरणा संबभूवेति.

सरस्वती—हा बालाऽशरणा च किमन्यत् कुर्यात् ततस्ततः

भारतभूमिः—ततः कुमार्या गोरक्षाया दर्शनसुखं सुखप्रवृतिंचाप्यलभमाना निर्मांना दीनदीना च तद्विरहदुःखदीर्घदीर्घान् वासरान् कथं कथमपि कष्टेन निर्गमयामि. ( इत्युक्त्वाऽश्रूणि मुंचति. )

सरस्वती—वत्से भारतभूमिके समाश्वासिहि समाश्वासिहि. एहि तावत्पुण्येष्वरण्येषु पुरेषु पत्तनेषु व्रजेषु ग्रामेषु च मृगयावस्तांवत्सां गोरक्षां । यतः

समूलाशेषकलुष समुन्मूलनदक्षया ।
गोरक्षया विना शून्यं पश्यामि सकलं जगत्.१९

भारतभूमिः—मातर्यथाज्ञा भगवत्याः (इत्युक्त्वोत्थाय परितः परिक्रम्य ) मातर्दृश्यते शून्यमिव जगद्विना गोरक्षया न क्वापि दृष्टिपथमवतरति मे गोरक्षा किं करोमि क्व यामि. (इति विलपति.)

सरस्वती—वत्से ब्राह्मणाः खल्वमी मन्य एतेषां मानसे विलीनया भाव्यमवश्यं गोरक्षया.

भारतभूमिः–( सखेदं ) मातः सदा सदुपस्करलाभलोभ-क्षोभवंतो ये गृह्णंति प्रतिदिनं गोदानानि नपुनर्यवसैरपि पोषयंति गास्तेषां मानसे गोरक्षा निवासं कुर्यादिसंभाव्यं.

सरस्वती–( अन्यतोवलोक्य ) पुत्रि क्षत्रिया इमे येषां पूर्वजाः पूर्वं गोब्राह्मणार्थं प्राणानपि पर्य्यसजन् तन्मन्ये तेषां हृदये भविष्यति गोरक्षा.

भारतभूमिः–दयामयाशये मातः स कोपि व्यतीतोऽवसरो यत्र क्षत्रकुलकैरवनक्षत्रनायका गोब्राह्मणानां प्राणत्राणमात्मप्राणसमर्पणेनापि समाचरन् इदानीं विषयविषरसावेशविवशाशया धनलवलाभलोभनिःशोभना वारांगनाविलासलालसाः कास्ति गोरक्षा सांप्रतं सा जीवति न जीवति वेति न चेतसापि चिंतयंति.

सरस्वती–( अन्यतोवलोक्य ) वत्से एते खलु वैश्याः निःसीमदयोदयोदधीनां येषां सर्वभूतदया सर्वजीवप्रतिपालनं च धर्मसर्वस्वं पश्य पश्य स्वधर्मकर्मतत्परा ये–

उच्चारकालसमनिःसरदात्मनीन ।
श्वासोष्मणा पवनजाः शतशोपि जीवाः ॥
नश्यंतु मेति मनसा प्रविचार्य सर्वे ।

वस्त्रांचलावृतमुखा गिरमुद्गिरंति. ॥ १६ ॥

ततो मन्ये तेषां हृदयेषु निःशंकमहिंसया सर्वभूतदयया च सहितया महितयातिहितया हि तया भाव्यं गोरक्षया.

भारतभूमिः—मातः "पथिका नैव जानंति जानंति सहवासिन" इति लोकोक्तिर्न मृषा यतोत्रभवती भवती परिचयाभावादमीषामेनानाहिंसापरान् सर्वभूतदयापरान् गोरक्षाप्रतिपालनपरांश्च मन्यते परंतु—

ते केपि वैश्या इतरे सहसाऽहिंसया सह ॥
सर्वभूतदया येषां हृदयान्न पलायते. ॥ १७ ॥

इमे तु पशुपालनवृत्तिवंशजन्मानोपि न पशुपालनपराः प्रत्युत परंपरया पशुघ्नाः

सरस्वती–(सखेदाश्चर्यं) पुत्रि कथमेते पशुपालनवृत्तयोपि परंपरया पशुघ्नाः ?

भारतभूमिः—देवि ! पशुघ्नास्तु साक्षात्पशून् घ्नंति वैश्यास्त्वेते गोचराणि गोनिवेशस्थलानि गोकुलपेयपयःसरसीश्च क्षेत्रलाभलोभतः कर्षयंति ततः क्षुधा तृषाच परासुतामुपगच्छतां पशूनां परंपरया हंतार एत एवेति मे निश्चयः

सरस्वती–पुत्रि भूमिलोभिनस्तु भूमिपाला न वैश्यास्तत्कथं वैश्येष्वेनं दोषं निःक्षिपसि?

भारतभूमिः–मातस्तेषां भूमिपालानां तादृशातिलोभकलाकौशल्यशिक्षागुरवस्तु त एव वैश्याः संति नापरे.

सरस्वती–वत्से कथं जीवदयाप्रतिपालकैरपि तैस्तादृशं नीचकर्माचरणमारभ्यते?

भारतभूमिः–जगज्जननि स्वोदरपूरणायैव ते वयं राज्यहितैषिणः कति कति न गोचराणि देवक्षेत्राणि सरसीः सरांसि च कर्षयित्वा कर्षयित्वा महत्सायद्धिः संपादितास्माभिरस्मिन् वर्षे गोगजाश्वेभ्यश्च परिमिततृणमात्रार्पणेन व्ययहानिश्च महती निर्मितेति वदंतो राजप्रियतामुपार्जयंति ॥ विचार्यमिदानीं देव्या ये स्वोदरपूरणाय गवामुदरपूरणसाधनापहरणपरायणांतःकरणास्तेषामंतःकरणेषु कथं गोरक्षा निवासं कुर्यादिति. (दीर्घमुष्णंच निःश्वस्य.)

मातर्विप्रकुलानि संप्रतिमया संवीक्षितान्यादरा।
देवं क्षत्रकुलानि चापि परितो दृष्टानि पृष्टानि च॥
दृष्टा वैश्यपरंपराः स्वजठरापूर्त्यैकबद्धादरा ।
गोरक्षा न विलोक्यते क्वचिदपि प्राणाः प्रयां-

त्यद्य मे. ॥ १८ ॥

(इति वदंती मूर्छया पतति.)

सरस्वती—वत्से समाश्वसिहि समाश्वसिहि. (इति वदंती वसनांचलेन वीजयंती तां प्राप्तसंज्ञां करोति.)

भारतभूमिः—(संज्ञामुपलभ्य) देवि मातः किमर्थं मुहुर्मुहुः संज्ञाप्रदानेन दुःसहदुःखानुभववतीं कुरुषे शृणु—

गावः कामदुघाः समस्तजगतामानंदकंदप्रदाः ।
सौभाग्यार्द्धसमृद्धिदा अनुदिनं सत्पुत्रसौख्यप्रदाः
ताःसंपीडयितुं प्रबद्धहृदयोत्कंठा नरा येऽवरा ।
स्तैर्हाभारवती न जीवितमपि स्वं धर्तुमिच्छाम्यहं

हा विनष्टैव किं गोरक्षा । गोरक्षे कासि कासि देहि मे प्रतिवचनम् हा वितीर्णविश्वविश्वंभरामंडलरक्षे गोरक्षे विना त्वया शून्यःसंसारः शून्या दिशः शून्यं चांतः-करणं मे. (इति विलपंती पुनः पतति.)

सरस्वती—वत्से भारतभूमि किमेवं कातरस्वांततां बिभर्षि.

किं ब्राह्मणा भुवि न संति हि धेनुभक्ताः।
किं क्षत्रिया अपि लसंति न धेनुभक्ताः ॥
वैश्याश्च किं जगति संति न धेनुभक्ताः ।

संत्येव किंत्विदमहो पुरमेव तादृक्. ॥ २१ ॥

अथवा को दोषः पुरस्य शास्त्रसंगसत्संगाभावस्यैवायं दोषो येनात्रस्था नरा अपि वानरा इव विवेकशून्याः स्वकीयान्यत्यावश्यकान्यपि कृत्यानि विस्मरंति ॥ भारत मंडलमिदमखिलं परिभ्रमंत्या मया पूर्वं बहुषु पुरेषु पत्तनेषु ग्रामेषु व्रजेषु खेटेषु खर्वटेषु ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः पारसीकाः किंबहुना पवित्रचरित्रवंतो यवना अपि गोपालनपरायणांतःकरणा विलोकितास्तदेहि परतः पश्यामः ( इत्युक्त्वा भारतभूमिं करे ग्रहीत्वोत्थापयति. )

( उत्थाय ) भारतभूमिः–( सास्रम ) मातः सरस्वति !

"राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः।
राजानमनुवर्तंते यथा राजा तथा प्रजाः ॥२२॥"

इति लोकोक्तिर्न मृषा तत् परितोसुरावतारैः सन्मार्गखनन तत्परैर्भूवरैरिव भूवरैः संकीर्णानि सर्वाणि नगराणि तादृङ्नरपालपालितानां प्रजानां च मनस्सु कथं गोरक्षाप्रवेशोपि संभवेत् तद्व्यर्थमेवेदं परिभ्रमणं नावितिमे प्रतिभाति.

सरस्वती–वत्से विपत्सु धैर्यमेवधार्यमार्यैरिति मावदन्

प्राकृतनाः प्रज्ञावंतस्तद्धैर्यमेवालंब्य स्थेयं वत्सया। पश्य पश्य नानादिग्देशचंक्रमणक्रमेण प्राप्ता वयमिदानीं श्री मथुराभिधानां पुरीं या मोक्षदासु पुरीषु स्वयमद्वितीयापि द्वितीया गण्यते तदेहि तावदत्रापि वत्सां गोरक्षामन्वेषयामः

भारतभूमिः—यथा मातुराज्ञेति (परितो भ्रमति.) (दूरादवलोक्य) मातः क एते परमौदास्यदास्यमास्येषु वहंतो विषादविषावेशलास्यलीलाभवनायमानमानसाः शोकाश्रुसलिलपूरपूर्णनयना गोधनान्यग्रतः कृत्वा शकटशेतारापिताशेषभवनपरिष्करा इत एवायांति. ?

सरस्वती—वत्से एहि प्रश्नेनैव ज्ञास्यामः सर्वम्. (किंचिदग्रतो गत्वा) भद्रमुखाः के यूयं कुत्र गम्यते किं निमित्तं च भवंत औदास्यमास्येपु वहंतीति ज्ञातुमिच्छावहे वैदेशिकेआवाम् तत्कथ्यतां यदि कथनार्हम्.

सर्वेपिपांथाः—देव्यौ यादवराजधानीवासिनो यादवा वयमिदानीं मथुरां परित्यज्यान्यत्र कुत्रचिद्गंतुमिच्छामः

सरस्वती—एवमकस्मान्निजनिवासनगरीपरित्यागे किं निदानं.

पांथाः—तत्सर्वमस्मासु वृद्धोयं यादवो बुद्धिवर्मा कथयि-

ष्यति.

सरस्वती-( वृद्धंयादवमुपेत्य ) आर्यवर्याः कथमस्मान्निज-कुलराजधानीनगरीमिमां परित्यज्य विदेशप्रयाणमंगीकृतं युष्माभिः

वृद्धः-महासत्यौ युवां के अपि देवते एवेति पुण्येनावर्ण्येन लावण्येन सुधाकिरा गिरा निष्प्रतिमया च प्रतिमया मे मनसि प्रतिभाति तन्निवेदयामि श्रूयतां यदि कौतुकम् अस्ति खलु महाराजस्योग्रसेनस्य ज्येष्ठः श्रेष्ठगुणः पुत्रः कंसः

सरस्वती-विदितमेतत्ततस्ततः

वृद्धः-एकदा च देवक्या अष्टमो गर्भस्त्वां हंतेति कंसमभाणीन्नभोवाणी.

सरस्वती-ततस्ततः

वृद्धः-ततश्च देवकीं केशे गृहीत्वा खड्गेन हंतुं प्रचक्रमे कंसः

भारतभूमिः-हा धिक् पापमारब्धम्.

सरस्वती-वत्से क्रूराः किमकृत्यं न कुर्वंति ? ततस्ततः

यादवः-ततो वसुदेवेन स्वपुत्रार्पणमंगीकृत्य मोचिता मृत्युमुखाद्देवकी.

सरस्वती–दीर्घदर्शिना वसुदेवेन देवकीप्राणत्राणसाधनं साधु निर्मितम् । ततस्ततः

यादवः–ततः सत्यपरिपालनपरायणांतःकरणो वसुदेवः प्रथमजं कीर्तिमंतं कंसायार्पयामास.

भारतभूमिः–हा दुःसहः सोढ आत्मजपरित्यागपरितापो वसुदेवेन.

सरस्वती–वत्से साधवः सत्यसंरक्षणाय किं किं न सहंते ? ततस्ततः

यादवः–ततः कंसोपि वसुदेवस्य तां सत्यभंगभीरुतरतां निरीक्ष्य परितुष्टस्वांतः

'प्रतियातु कुमारोयं नैवास्मादस्ति मे भयम् ॥
अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥ १ '

इत्युक्त्वा पुनस्तं तनयं वसुदेवायार्पितवान्.

सरस्वती–सोयं सत्यस्य प्रभावः। ततस्ततः

वृद्धः–ततश्चैकदा दर्शनदानायागतं नारदं पूजयित्वा प्रणम्य चापृच्छत्कंसः भगवन् नभोभारत्या 'देवक्या अष्टमो गर्भस्त्वां हंते'त्युक्तं। कथं मद्भागिनेयोपि भूत्वा मां हंतेत्येतद्विषये मे महती शंका.

सरस्वती–ततः किमुक्तं नारदेन.

वृद्धः—नारदस्तु "अयि यादवकुलावतंस कंस त्वं खलु पूर्वं विष्णुना हतस्य कालनेमिनाम्नो दानवस्यावतारोसि देवक्याश्चाष्टमः पुत्रो विष्णुरेव भविता स च पूर्ववैरमनुस्मृत्य त्वां हंतैव। किंचामून् यादवान् नंदादीन् गोपांश्च देवावतारानवेहि न नरान्" इत्युक्त्वा नभोमार्गेणागच्छत्.

सरस्वती—ततस्ततः

वृद्धः—ततश्च कंसेन निजमित्रेभ्योऽसुरपुरःसरेभ्यः सर्वेभ्यो नारदोक्तं सर्वं निवेदितं। श्रुत्वा च ते 'यद्येवं तर्हि विष्णुमूलोन्मूलनाय प्रयतामहे। मुख्यं हि मूलं गावो ब्राह्मणाश्चातो गावो ब्राह्मणाश्चाहरहर्हन्तव्या इति निश्चित्य कंसाज्ञया हिंसां कर्तुं प्रवृत्ताः

भारतभूमिः—मातः! "विनाशकाले विपरीतबुद्धि" रिति लोकोक्तिर्न मृषा.

सरस्वती—वत्से एवमेव.

वृद्धः—यत्र गोब्राह्मणानां हिंसा स्यात्तत्र न क्षणमपि स्थेयमिति विचार्य परित्यक्तास्माभिर्यादवराजधानी श्रीमथुरेत्युक्तं भगवत्यै मथुरात्यागकारणम्.

सरस्वती—आर्य संतुष्टं नौ स्वान्तं युष्मद्वचनश्रवणेन वर्ततेद्यापि लोके गोरक्षा गोभक्तिश्चेत्यनुमीयते.

वृद्धः-जीवत्सु यादवेषु न ते क्षयमुपेयाताम्.

सरस्वती-तत एवानुदिनं भवतु यादवानामभिवृद्धिरिसाशासे। आर्य साधयतु भवान् सार्द्धं सार्थेन यथाभिमतं देशांतरं गंतुम् । आवामपि मथुरां विलोकयितुं साधयाव:

वृद्धः-यथाज्ञा देव्या ( इत्युक्त्वा प्रणम्य निष्क्रांतः )

सरस्वती-वत्से भारतभूमिके एहि मथुरायामपि गोरक्षां मृगयावहे ( इत्युक्त्वा सह भारतभूम्या निष्क्रांता )

( ततः प्रविशति षड्भिः पुत्रैर्देवक्या च सहितो वसुदेवः )

वसुदेवः-( पार्थिवेश्वरचिंतामणिपूजां विधाय कृत्वाचाभिलाषाष्टकस्तोत्रपाठम् ) प्रिये पूर्णा ते पार्थिवेश्वरपूजा न वा?

देवकी-प्राणनाथ पार्थिवेश्वरपूजाभिलाषाष्टकस्तोत्रपाठश्च पूर्णः सांप्रतं तु गोपालसंतानमंत्रजप एवावशिष्टः

वसुदेवः-ममापि स एवावशिष्टो जप इसहमपि जपामि.

( इत्युभौ नेत्रे संमील्य मंत्रजपाभिनयं कुरुतः )

( ततःप्रविश्य )

दासी-( स्वगतम् ) अहो इमौ तु ध्याननिमीलितेक्षणौ न किंचित्पश्यतो न किंचिद्वदतश्च कुमारकीर्तिमतएव निवेदयामि ( प्रकाशम् ) कुमार ! अस्मद्गृहांगणमलकुंरुतः

के अप्यदृष्टपूर्वे क्षितितलकौतुकावलोकनायावतीर्णे इव देवते ब्राह्मण्यौ वदतश्च ते 'देव्या देवक्या सहितं सपरिवारं वसुदेवमेव द्रष्टुमागते स्व' इति ततः कुमाराज्ञैव प्रमाणम्

**कीर्तिमान्**–अहो महद्भाग्यं (इत्युक्त्वोत्थाय त्वरिततरं गृहांगणमुपेत्य च ) मातरौ कीर्तिमानहमभिवादयामि वः

**ब्राह्मण्यौ**–पुत्र ! कीर्तिमन् दिगंतविश्रांतकीर्त्तिर्भव.

**कीर्तिमान्**–मातरौ गृहाभ्यंतरमपि निजपदपद्मरजःस्पर्शेन पवित्रयिष्यथ युवां.

**ब्राह्मण्यौ**–वत्स बालस्यापि ते विनयेन संतुष्टे स्वः ( इत्युक्त्वाभ्यंतरं गच्छतः )

**कीर्त्तिमान्**–(आसनपरिग्रहं कारयित्वा ) मातरौ क्षणमत्रावस्थानेन कृतार्थयतमस्मद्गृहं समाप्तमंत्रजपौ मे मातापितरौ युवां संभावयिष्यतः

**ब्राह्मण्यौ**–यथाह वत्सः (इत्युक्त्वा उपविशतः)

**एका**–( सर्वतोवलोक्य ) अहो बाला अप्येते बालभावसुलभमपि चापलमपहाय पूजोपहारसंभारं सज्जं कुर्वंति.

**द्वितीया**–न विनागण्यैः पुण्यैरेतादृशानि पुत्ररत्नानि लभ्यंते.

**प्रथमा**–( पुनरन्यतोवलोक्य ) मातः कामधेनुमिव धेनुमि-

मामालोक्य प्रमोदपीयूषपूरे निमग्नं मनो मे.

कीर्तिमान्–मातरौ सेयं मे पित्रोः परदेवतेव नित्यपूज्यास्ति । परिसमाप्तजपावेनां पूजयिष्यतः

उभौ–तदपि दृष्ट्वाऽमंदमानंदमनुभविष्यावः

( ततः परिसमाप्तजपौ. )

देवकीवसुदेवौ–(समुन्मील्य नेत्रे दृष्ट्वा च के अप्यदृष्टपूर्वे स्त्रियौ शीघ्रमुत्थाय सरसचंदनपुष्पाक्षतैः संपूज्य च) मातरौ के युवां कुत आगते का चाज्ञा दासे मयि भगवत्योरेतत्सर्वं निःशंकमुच्यताम्. ( इतिसांजलिबंधं प्रार्थयतः )

उभौ–वत्सौ ! वैदेशिके आवां नानादिग्देशदर्शनप्रसंगेन समागते यदुराजधानीमिमां मथुरां निःसंख्यपुण्यजनसंकीर्णायामप्यस्यां बहुभ्यो बहुज्ञेभ्यः सुज्ञेभ्यो युवयोर्दंपत्योर्निष्प्रतिमां सत्यपालनप्रीतिं निर्निमित्तां धर्मशीलतामनन्यसामान्यां च भगवद्भक्तिं श्रावं श्रावं श्रवणाभ्यामाभ्यामीक्षणाभ्यामपि तत्सर्वं प्रत्यक्षं वीक्षितुमिदं भवन्मन्दिरं समागते स्वो दृष्ट्वा च यथाश्रुतं सर्वं संतुष्टस्वांते स्वः

वसुदेवः–( देवकींप्रति ) प्रिये.

इयं मूर्तिमती ब्राह्मी संपत्सर्वसुखप्रदा ।

क्षमा च मूर्तिमत्येषा नैकापि पामरी नरी ॥२२॥

उभे–(साश्चर्यंस्वगतं) अहो अवगते स्वः किम्? अथवोपचारवचनं घुणाक्षरन्यायात्पतितम् ( प्रकाशम् ) वत्से देवकि वत्सया यदिदं पार्थिवेश्वरपूजादि सत्कृत्यं क्रियते तत्कस्योपदेशेन कस्योद्देशेन च विधीयते इति ज्ञातुमुत्कंठा नौ.

देवकी–मातरौ यद्यपि स्वकृतसुकृतसंकीर्तनं स्वयं कृतं सुकृतिनां सुकृतक्षयनिदानतामुपगच्छतीति श्रूयते तथापि भगवत्योराज्ञया निवेदयामि युष्मादृशीनां महासतीनां पुरतो निरभिमानितया निवेदितं सुकृतं न क्षीणतां गच्छति किं तु श्रद्धासंपद्विशिष्टशिष्टजनवितीर्णानुमोदनजन्यानन्यसामान्यश्रद्धाभ्युदयादनुदिनोदयमवधिविधुरामभिवृद्धिमेवोपगच्छतीति मन्येहं.

उभौ–वत्से निसर्गसिद्धा श्रद्धैव ते सुकृताभिवृद्धिं विधातुं जागर्ति तन्निःशंकं निवेदय.

देवकी-भगवत्यौ मत्पाणिग्रहणमहोत्सवमये समये गगनगिरा 'देवक्या अष्टमो गर्भस्त्वां हंते' त्युक्तं कंसाय.

उभे–ततस्ततः

देवकी–ततो निशम्यैव गगनगोचरां तां गिरं मां निहंतु-

मुद्यतात्कंसान्मम प्राणनाथेन मत्प्राणत्राणाय मत्पुत्रस-मर्पणमंगीकृत्य मृत्युमुखान्मोचिताहम्.

उभे–धन्यं सौजन्यं पत्युस्ते ततस्ततः

देवकी–सत्पुत्ररत्नं हि देवानामपि दुर्लभं तादृशान्यनर्घ्याणि पुत्ररत्नानि मत्प्राणत्राणनिमित्तं मत्प्राणनाथेन मृत्यवेर्प-यितुं प्रतिज्ञा कृता सेयं दांपत्यप्रेम्णःपरिसीमा प्रकाशिता महाभागेन तेन परं धिङ् मां मंदभागिनीं याहं प्राणा-धिकत्राणार्हपुत्रप्राणार्पणमप्यंगीकृत्य प्राणिमीत्यतनुतरा-नुतापतप्तांतःकरणा कदाचित्कृपया गृहागतं भगवंतं नारदमपृच्छम्.

उभे–किं वत्सया पृष्टम् ?

देवकी–भगवन् सत्पुत्रमुखदर्शनसुखं तु देवानामपि दुर्ल-भमिति जगत्प्रसिद्धमेव ततो येन सत्पुत्रप्राप्तिः स्यात्प्रा-प्तानां च सत्पुत्राणां परिरक्षणं स्यात्तादृशं कमपि स-दुपायं भगवतां धर्मपुत्र्यै मह्यमुपदिश्य कृतार्थयिष्यसीमां दीनां पुत्रीम्.

उभे–वत्से सम्यक्प्रोक्तं ततस्ततः

देवकी–मातरौ मत्प्रार्थनाश्रवणोत्तरक्षणएव "वत्से सत्पुत्र-रत्नार्पणप्रवणं प्राप्तसत्पुत्ररत्नसंरक्षणचणं च जगति जा-

गर्ति साधनत्रयमेव प्रत्यहं श्रीपार्थिवेश्वरचिंतामणिसमर्चनपूर्वमभिलाषाष्टकपाठपरिशीलनं प्रत्यहं श्रीगोपालचिंतामणिमंत्रसहस्रजपः प्रत्यहं सकलकामदुघायाः कामदुघायाः परमया प्रीत्या पूजा चेति तदेतेषामन्यतमं विधाय संप्राप्तसर्वाभीप्सिता सत्पुत्ररत्नवती च भविष्यसी– " त्युक्त्वा भगवान्नारदो नभोमार्गमगच्छत्.

उभे–वत्से भगवता नारदेन लोकोत्तरं साधनत्रयमुपदिष्टम्। ततस्ततः

देवकी–मया तु सत्पुत्रप्राप्तिपर्य्युत्सुकया साधनत्रयमपि विशुद्धया श्रद्धया युगपदेव प्रारब्धम्.

सरस्वती–तदपि सम्यगेवाऽऽचरितम् । ततस्ततः

देवकी–ततश्च तस्यैव साधनत्रयकल्पपादपस्यैतानि षट् सत्पुत्ररत्नानि फलानि संतोषयंति स्वांतं नौ.

सरस्वती–वत्से विशुद्धया श्रद्धया कृतानि सुकृतानि न कदाचिन्निष्फलतां व्रजंति.

देवकी–मातरौ नारदोपदिष्टसाधनत्रयेण सत्पुत्रप्राप्तिस्तद्रक्षणं च जातं.

सरस्वती–तत्रापि नृशंसनिकरोत्तंसात्कंसादिति विश्वविस्मयकरःसाधनत्रयस्यैष महिमेति निर्विवादम्.

भारतभू.—वत्से भवति कालातिपातस्ताद्विधेहि धेनुपूजनं वयमपि तद्विलोक्य यास्यामः

देवकी—यथाज्ञा देव्योः (इत्युक्त्वा वसुदेवेन सह धेनुपूजां करोति) [विधाय चंदनाक्षतपुष्पैः पूजां समर्प्य पुष्पमालां विरचय्य च प्रदक्षिणामवतार्यारातिंकं बद्धांजली उभौ प्रार्थयतः]

मातः कामदुघे स्वभक्तजनतासर्वार्थसिद्धिप्रदे।
तुभ्यं देवि नमो नमोस्तु भवतीं सर्वार्थसिद्धिप्रदां
वंध्याः कत्यभवन्न पुत्रमणिभिर्युक्ता दरिद्राः कति
त्वामाराध्य नरा न राजविभवा अज्ञाश्च सुज्ञा न के. ॥ १ ॥

सरस्वती—वत्से भारतभूमि ! पश्य गोभक्त्युद्रेकमेतयोः

भारतभूमिः—मातर्यादृशी भक्तिस्तादृशमेव फलमप्यनुभूयते ताभ्यां । अपिच.

किं कल्पद्रुमकाननैः किमथवा चिंतामणीनां गणैः
किं वा स्पर्शमणीभिरत्र जगति श्रेयःश्रियंवांछतां ॥
येषां त्वं जननी प्रसादसुमुखी पुण्यैरगण्यैर्भवे ।
स्तेषां सद्म समाश्रयंति सततं कल्पद्रुमाद्याःस्वयम्

 

अपिच.

पीत्वा श्री यमुनाजलं सुविमलं वैडूर्यवर्यप्रभं ।
भुक्त्वा नीलमणिच्छवीनि यवसान्यानंदतस्तत्तटे।
कृत्वा तत्तटकाननानिच पवित्राणीष्टसंचारतः ।
सायं नः सुखयिष्यसीह नयनान्येषास्मदीयार्थना

देवकी–( दक्षिणाक्षिस्फुरणमभिनीय ).

कनकनूपुरशोभिपदद्वया ।
कनकशृंखलया कलिता गले ॥
नयनहर्षकरी न चिरात् कदा ।
मम तु कामदुघाऽद्य भविष्यति ॥ १ ॥

नाथ नखल्विदानीमिमां वनाय मोक्तुमुत्सहते मनो मे.

वसुदेवः–देवि गवां खलु वनेषु स्वैरसंचारो यां पुष्टिं कुरुते न तां पुष्टिं गृहनिवासः कदाचिदपि कर्तुं शक्तस्तादिदानीं मोचनीयैवैषा.

देवकी–यथाज्ञा नाथस्य ( इत्युक्त्वाचारुमतीमाह्वयाति ).

( प्रविश्य. )

चारुमती–मातरेषास्मि किमाज्ञापयसि.

देवकी–एनां धेनुं यमुनातीरतरुखंडछायायां विमुच्य त्वरितमत्रागंतव्यम् ( इत्युक्त्वातत्करेसुवर्णशृंखलामर्पयति. )

चारुमती–एहि कामदुघे एहि ( इतिवदंतीशनैःशनैस्तांन-
यति )
देवकी–( कनकनूपुरेतिपठंती नेत्राभ्यामश्रूणि वर्षंती देव्यो
रग्रे तिष्ठति ).
सरस्वती–वत्से देवकि किमित्येवमुन्मनायसे.
देवकी–मातर्न जाने केन कारणेनेदं मनस्यौदास्यं समु-
त्पन्नमिति परं धेनुविसर्जनक्षणत एव किमप्यनिष्टमि-
वागामि निवेदयति प्रतिक्षणं स्फुरद्दाक्षिणेक्षणं मे.
भारतभूमिः–वत्से मा चिंतां कुरु गोपालएव गोपालन-
प्रणयी भविष्यति.

( ततः सोद्वेगा प्रविश्य. )

चारुमती–हा महाराजस्यानुचरौ वृकानुजवकानुजौ मम
हस्तादाच्छिद्य सुवर्णशृंखलां बलान्नयतो भूमितलकाम-
धेनुं धेनुं नः शीघ्रं धावत धावत.
वसुदेवः-( श्रुत्वा ) धिग् रे मदीयां धेनुं कः करेणापि
स्पृष्टुं शक्त ( इतिवदन्सखड्गोनिष्क्रांतः )
देवकी–हा धेनुर्मे कंसानुचराभ्यामसुराभ्यां बलान्नीयते
हंत फलितं मे दुर्निमित्तेन किमिदानीं करिष्यामि अथवा
प्राणानर्पयित्वा मोचयिष्यामि धेनुम्। मातरौ! अनुज्ञा-

तुमर्हथ युवां गच्छामि प्राणविनिमयं कर्तुम्.

सरस्वती—आवामपि सहैवागमिष्यावः (इत्युक्त्वानिष्क्रांताःसर्वे.)

इति श्रीमद्गोपालचिंतामणिविजये प्रथमोंऽकः॥

श्रीविठ्ठलात्मजनुषोर्द्विशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः।
एषा कृतिर्मम तु शंकरलालबंधो-
र्गौरीगिरीशपदयोः कुसुमांजलिः स्तात्॥१॥



# ॥ अथ द्वितीयोंकः ॥

( ततः प्रविशति सपरिवारः कंसः )

कंसः–प्रधानवर्य केशिन् किमद्यावधि विष्णुमूलोन्मूलनाय विहितं युष्माभिः सर्वैः ?

केशी–महाराज प्रतिपुरं प्रतिपत्तनं प्रतिग्रामं प्रतिघोषं प्रतिखेटं प्रतिखर्वटं च प्रेषिताः निर्जितसुराअसुरास्ते च प्रतिदिनोदयं निजगुणगौरवतुलितकामधेनूर्धेनूः शांत दांतस्वांतवतो ब्रह्मविदो ब्राह्मणांश्च त्रासयंति ताडयंति मारयंति च.

कंसः–साधु रे साधु केशिन् ! को विना त्वादृशममात्यं तादृशमस्मदीयाऽतिहितं कर्तुं शक्नुयात्. ?

केशी–सर्वोप्ययं महिमा महाराजस्यैव किं चान्यदपि स्वमतानुसारेण कृतमस्ति.

कंसः–किं तत्. ?

केशी–कर्षितानि गोचरस्थलानि गोपेयपयःसरांसि गोनिवेशस्थलानि च च्छायातरवोप्यनेके मूलत उन्मूलिताः पातिताश्च पाठशाला धर्मशाला गोशालाश्च। किं च वेद-

विरुद्धविचारविचरच्चेतसः पाखंडपथपंडितप्रवरनिकरा-नाहूयाहूय तदुक्तोपदेशपरंपरया शिथिलिता श्रद्धा वेदेषु वेदधर्मेषु देवेषु च ब्राह्मणक्षत्रियविशाम्.

कंसः–( सपरितोषम् ) केशिन् इदमपि प्रकारांतरं भगव-न्मूलभूतानां गोब्राह्मणानां विनाशस्येति सम्यक् कृतम् ततस्ततः

केशी–ततश्च मन्ये स्वल्पैरेवाहोभिर्भविष्यति भवद्वैरिणो महाविष्णोर्मूलोन्मूलनमिति.

कंसः–( सहर्षं ) अमात्यवर्य ! इदानीमकुंठप्रसारवसा भव-न्मया जीवितौ द्वावप्यावाम्.

( नेपथ्ये. )

हा द्वावपि मृतौ मृतौ मारितौ मारितौ हंत क्व गच्छामि किं करोमि.

कंसः–( सोद्वेगं ) को दुर्निमित्तमिदं प्रलपति ( प्रकाशम् ) कः कोस्ति भो दुर्वचोवक्ता (इतिवदन्खड्गमुद्यम्योत्तिष्ठति.)

( प्रविश्य. )

दूतो दुर्मुखः–कथमहो महाराजोत्रैव तिष्ठति निवेदयामि सर्वं वृत्तांतमस्मै. महाराज ! मृतौ मृतौ मारितौ मारितौ.

कंसः–( सरोषं ) मूर्ख केन मारितौ कौ च मृतौ स्पष्टं

निवेदय.

दुर्मुखः—देव भवदुक्तौ द्वावपि वासुदेवेन मारितौ मृतौ च.

कंसः—( सविशेषकोपावेशम् ) धिग् रे मूर्ख किमिदं प्रलपसि को वासुदेवः कौ च तेन मदुक्तौ द्वौ मारितौ स्फुटं कथय.

दुर्मुखः—( क्षणं विचार्य ) महाराज क्षंतव्यम् । वसुदेवेनेति वक्तव्ये त्रा सान्मया वासुदेवेनेत्युक्तं.

कंसः—भवतु वसुदेवेन कौ मारितौ कौ च मदुक्तौ मारिताविति त्वरितं कथय.

दुर्मुखः—क्षणं विश्रम्य कथयामि.

कंसः—तथा कुरु अवहितोऽस्मि श्रोतुम्.

दुर्मुखः—विदितमेव देवस्य यद् 'वत्सौ यां सदा पूजयाति देवकी देवधेनुमिव धेनुं सा भवद्भ्यामपहर्तव्येति ' भवदुक्तौ वृकानुजबकानुजौ तामपहर्तुं प्रयत्नपरंपरापरायणावभवतामिति.

कंसः—विदितमेवैतन्मे ततस्ततः

दुर्मुखः—अद्यावधि च तद्विषये तयोः सकलाःप्रयत्नपरंपरा निष्फला एवेसेतदपि विदितमेव देवेन.

कंसः—विदितमेव ततस्ततः

दुर्मुखः—अद्य प्रातर्देवक्या संपूज्य विसर्जितां सुवर्णशृंखलानियमितां तां धेनुं यमुनातीरं नयंती देवक्या दासी चारुमती दृष्टा ताभ्याम्.

कंसः—ततस्ततः

दुर्मुखः—ततस्ताभ्यां बलाच्चारुमतीकरादाच्छिद्य गृहीता सा धेनुर्धेनुवधस्थानमुपनीता.

कंसः—चिरात्संपादितं स्वामिसमीहितं स्वस्वामिसमीहितसंपादनैकबद्धावधानाभ्यां ताभ्यां। ततस्ततः

दुर्मुखः—ततः सोरस्ताडं चारुमत्या निवेदितवृत्तांतो वसुदेवः क्रोधात्तत्क्षण एवागत्यैकेनैव खड्गप्रहारेण वृकानुजबकानुजौ प्रेषयामास यमसदनं गां च तामक्षतां स्वसदनं निनाय एवं निजधेनुभर्त्सनापराधपरिक्रुद्धेन वसुदेवेन मारितौ बकानुजवृकानुजौ मृतौ चेति निवेदयितुमेवागतोहं देवायातः परं देवः प्रमाणम्.

कंसः—( सरोषशोकावेशं ) हा वत्सौ युवयोरपीदृशी दशा। धिग् रे कृतघ्न वसुदेव धिक् त्वां.

केशी—महाराज वत्सयोर्वृकानुजबकानुजयोर्मरणमुपश्रुत्य वेपते मे हृदयं न खलु यदुवंशीया विश्वासार्हाः पूर्वमेवोक्तं महर्षिणा नारदेन सर्वोपि यदुकुलोत्पन्ना देवाव-

तारा एव न नरा इति वसुदेवोपि तद्वंशजत्वाद्देवांशसंभवो विष्णुपक्षपाती चेत्यशंकमेवावगंतव्यम्.

कंसः–( सखेदं ) यदाहामात्यस्तत्तथैव । कल्पपादपबुद्ध्या विषपादपः परिपोषितो यद्वसुदेवः स्वसंबंधिबुद्ध्या संरक्षितः

केशी–अलं व्यतीतविषयविषादेन नातः परं यादवेषु प्रियसुहृद्बुद्धिर्विधेया.

कंसः-कथं परिभुक्तात्मप्रमादफलः पुनः प्रमादं करिष्यामि.?

केशी–दुर्मुख ! गच्छ स्वाधिकारमशून्यं कुरु.

दुर्मुखः–यथाज्ञाऽऽमात्यस्येति ( निष्क्रांतः )

कंसः–केशिन् ! वृकानुजबकानुजयोर्वसुदेवेन विहितो वधो महाव्याधिरिवानुक्षणं भिनत्ति मे सर्वाणि मर्माणि.

अगृहीत्वा ततस्तस्य वसुदेवस्य दुर्मतेः ॥
प्राणाधिकप्रियां धेनुं प्रजां वा नास्ति मे सुखम् ॥

तदेहि वसुदेवनिवासमेव त्वरितं गच्छावः

केशी–यथाज्ञा महाराजस्य । इत इतो महाराजः ( इति निष्क्रांतौ केशिकंसौ )

( ततः प्रविशति सपरिवारो वसुदेवो भारतभूमिः सरस्वती च )

सरस्वती–वत्स वसुदेव ! वत्से देवकि ! दिष्ट्या वर्द्धसे का-

मधेनोरिवास्या धेनोर्लाभेन.

भारतभूमिः—कालांतकयोर्मुखादेव संरक्षितेयं धेनुर्वत्से-
नेति मन्येहं.

वसुदेवः—सर्वोप्ययं प्रभावो भगवत्योरेवेति मन्येहं.

देवकी—देव्यौ! वधस्थानगताया अस्याः पुनरागमनं भगव-
त्योराशिषैवेति निर्विवादम्.

अद्य मे सफलं जन्म जीवितं चापि मेऽखिलम् ।
देव्यौ प्राणसमाया मे धेनोरस्यास्तु रक्षणात् ।२।

( इत्यश्रूणि मुंचति. )

कीर्तिमान्—देव्यौ! मातेयं मे कातरतरस्वांताऽनभिज्ञा च
तातचरणानां मे निःसीमतमगोभक्तिप्रसरेऽपि.

मां वा ममानुजान् सर्वान् प्राणानपि निजानयं
गोरक्षणार्थं नोदास्ते दातुं सर्वस्वमेव वा ॥३॥

सरस्वती—वत्स! सोयमशक्तस्य पंथाः। तातस्तु ते कराल-
करवालमात्रसहायः कालांतकयमेभ्योपि गां मोचयितुं
शक्तः का वार्त्ता वराकयोर्बकवृकपार्श्वमजनुषोः। दृष्टम-
नया दृष्ट्या वधस्थानमुपनीताया अस्या धेनोर्वधाय—

कोशादसी विनिष्क्रांतौ यावद्दनुजयोस्तयोः ।
असवोपि विनिष्क्रांतास्त्वत्तातासिप्रहारतः ॥

कीर्तिमान्—मातरौ ! मदुक्तोपि पंथा न केवलमशक्तस्य शक्तस्यापि कदाचित्सत्यपालनपाशप्रवद्धस्यावश्यमनुसरणीयतामुपयाति.

भारतभूमिः—वत्स ! यथार्थैवेयमुक्तिस्ते। नानीदृशतातजात ईदृशाविचारचारिचेताः स्यात्.

देवकी—देव्यौ ! कंपतेऽद्यापि मे हृदयं श्रवणपथासवकष्टककनिष्ठवंधुप्राणविध्वंसः कंसः किं करिष्यतीति.

देव्यौ—वत्से ! मा भैषीः। विश्वविश्वंभराश्रेयस्करी जागर्त्येव श्रेयसे ते गोभक्तिः

कीर्तिमान्—(प्रहस्य) मातः! कथमेवं पामरादपि बिभेषि.

आयात्वयं स्वयं कंसः केशी वा कंसकेशिनौ।
खड्गमात्रसहायोपि न बिभेमि किमप्यहम् ॥५॥

देवकी—वत्स ! नाहं मत्प्राणत्राणाय बिभेमि किं तु हत्वापि वृकवककनिष्ठसोदरौ संरक्षिता येयं तातचरणैस्ते धेनुस्तां यदि कंसः केशी वाऽपहरिष्यति तर्हि निष्फलमेव जन्म जीवितं च नः पुनः सर्वेषामिति बिभेमि.

कीर्तिमान्—कथमस्मासु जीवत्स्वेव कदाचिदपि संभवत्येवं भवितुं ? न खलु तद्विषये मात्रा कापि चिंता विधेया.
आयातु कंसः केशी वा गोविद्वेषी परोपि वा।

प्राणानप्यर्पयिष्यामो न तु प्राणाधिकां तु गाम्

नेपथ्ये—कः कोऽस्ति भोः! उद्घाट्यतां कपाटं महाराजः कंसो महामात्येन केशिना सहागत्य गृहांगणभूमिमिमां भूषयति.

देवकी—( सभयकंपं ) देव्यौ! यदशांकि भयं तदेव संपन्नं। किमतः परं भविष्यति. ?

देव्यौ—वत्से! मा विह्वला भव गोपालचिंतामणिरेव ते निष्प्रातिमां गोभक्तिं विलोक्य साहाय्यं करिष्यति.

वसुदेवः—( सधैर्यमुत्थाय कपाटमुद्घाट्य च ) अहो महाराजः स्वयमेवास्मद्गृहांगणभूमिं भूषयति। सुदिनमिदं मे। एतु एतु महाराजः

केशी—(स्वगतं) कुदिनमिदं मे इत्येववक्तव्यम् ( प्रकाशम् ) आर्य! अलीकवाङ्माधुर्येण खिद्यते महाराजः

वसुदेवः—सर्वत्र पापमेव पश्यंति त्वादृशाः पापा अमात्याः किमत्रालीकवाङ्माधुर्यमस्ति ?

कंसः—किमर्थमेवममात्यायापि कुप्यते.

"धातुवादे सुवर्णाशा मोक्षाशा कौलवे मते।
जामातरि च पुत्राशा तिस्र आशा निरर्थकाः"

इति लोकोक्तिर्न मृषा। अस्मत्तातपादैः पुत्रानिर्विशेषं

प्रतिदिनं पालितो लालितः पोषितोपि त्वमस्माकमेवा-श्रेयः समीहसे मुखेन च श्रवणसुखदां गिरमुद्गिरसि तदेवालीकं वाङ्माधुर्यं.

वसुदेवः—कदा कीदृशं च मया महाराजस्याऽश्रेयः समीहितमित्याबाल्यादद्यापि न स्मृतिपथमायाति ततो महाराज एव निवेदयतु तत्.

कंसः—निवेद्यते.

वसुदेवः—श्रूयते.

कंसः—गावो ब्राह्मणा वेदाश्च भगवतो महाविष्णोर्मूलं न वा?

वसुदेवः—नेति केनोच्यते । मूलमेव ते महाविष्णोः

कंसः—यानि यानि विष्णुमूलभूतानि भूतानि तानि तानि ममाश्रेयस्कराणि.

वसुदेवः—(साश्चर्यावेशं) भद्रमुख! केयं भ्रांतिस्ते? सर्वलोकश्रेयोदुघा गावो ब्राह्मणा वेदाश्च कथं तवाश्रेयोदुघाः?

कंसः—विष्णुमूलत्वात् । विष्णुर्हि मे पूर्ववैरी ततस्तन्मूलोन्मूलनाय प्रवृत्तानामस्माकं तन्मूलरक्षणपरः सर्वोपि जनोऽश्रेयस्कर एव.

वसुदेवः—कंस कंस! कोयं मतिविपर्यासस्ते? गोब्राह्मणप्रतिपालनपरायणांतःकरणानि हि यदुकुलानीति जग-

त्प्रसिद्धमेव तादृगुज्वलकुलसुधासागरसुधाकरस्य ते नेदृशोल्वणवाणीविषवर्षणमुचितं। विदितमेव च ते.

सर्वश्रेयोवहाः सर्वसुपर्वसंघसंश्रयाः।
गावस्ताःपीडयन् पापी कोऽचिरान्न विनश्यति॥

किंच–

"गतश्रीर्गणकान् द्वेष्टि गतायुश्च चिकित्सकान्
गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत"इति भगवदुक्तिरपि न ते स्मृतिपथमवतरति?

केशी–सर्वमेतद्यदुकुलसंभवानां भगवद्वचनादि मान्यं न पुनः कालनेमिनवावतारस्य महाराजस्य यतस्तस्य तु विष्णुर्वैरी.

वसुदेवः–हा हंत! दयासिंधौ विश्वबंधौ विष्णावपि वैरिबुद्धिः!! किं चित्रं वा त्वादृशामात्यमत्यनुसारानुवर्तिनां राज्ञां मतिविपर्यासे। राज्ञां प्रायः पापप्रधानाः प्रधाना एव प्रथमे वैरिणो नान्ये येषां संगाद्राजानो हितमहितमहितं च हितं सत्यमसत्यमसत्यं च सत्यं पथ्यमपथ्यमपथ्यं च पथ्यं कृत्यमकृत्यमकृत्यं च कृत्यं हेयमुपादेयमुपादेयं च हेयं विषममृतममृतं च विषं मन्यंते मंदमतयो मंदभाग्याश्च। एवमनर्थमेवार्थं दर्शयतां त्वादृशां

प्रधानाधमानां नैहिकं श्रेयो नामुष्मिकं च श्रेयः कदाचिदपि संभवति केवलं लोकधिक्कारसंदग्धा इहानुभूयानुभूयाश्रेयःपरंपराः परत्रानुभवंत्याकल्पमनल्पा निरययातनापरंपराः

केशी–( स्वगतं ) महाराजस्यांतःकरणं क्षणेनैवायमार्द्रं करिष्यति (प्रकाशं) शौरे! स्वकीयस्वामिनः प्रियं हितं च स्वकीयप्राणार्पणेनापि कर्तव्यमिति सदमात्यानां सद्भृत्यानां च सनातनो धर्मस्ततोऽस्मद्धर्मानुसारेण महाराजमहावैरिणि महाविष्णौ विद्वेषं महाविष्णुमूलभूतानां च गोब्राह्मणानामुन्मूलनमाचरतामस्माकं को दोषः?

वसुदेवः–( सरोषं ) धिग् रे मूढ! स्वमतिमूढतया महाराजस्यैवाप्रियमहितं चाचरसि। अथवा कस्ते दोषो महाराजस्यैव सा मूढता यतस्त्वादृशैर्मूढमतिभिः सह स्वहिताय मंत्रयते त्वादृशामुपदेशवचांसि शृणोति समनुसरति च त्वादृशाधमाधमतमामात्यमत्यान्विष्टमानिष्टमपि पंथानं.

कंसः–( सरोषं ) अलमलमनल्पजल्पनकल्पनया नामात्यानुमत्या नान्येषां वाऽनुमत्या किमप्यहमाचरामि किमर्थं व्यर्थं ममामात्यममुमुपालभसे?

वसुदेवः–भो भो भोजराज! चेतश्चक्षुः समुन्मील्य किं-

चिद्विलोकय विलोकय । किं क्वापि श्रुता दृष्टाऽनुभूता वा गवां ब्राह्मणानां च हिंसा हितकरी चतुर्दशभुवनबंधौ दयासिंधौ च महाविष्णौ विद्वेषलेशावेशोपि च श्रेयस्करः? हा क्व गता ते हिताहितावलोकनकुशलता क्व विलीनं ते दाक्षिण्यं क्व प्रणष्टं च ते निगमागमानुसारित्वम्? किं भुवनत्रयीवंद्यानां गवामपि महिमानं न वेत्सि? शृणु रे राजन्.

गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः ।
गावो भविष्यं भूतं च गोषु सर्वं प्रतिष्ठितम् ॥
धारयंति प्रजाश्चैव पयसा हविषा तथा ।
एतासां तनयाश्चापि कृषियोगमुपासते ॥११॥
जनयंति च धान्यानि बीजानि विविधानि च ।
ततो यज्ञाः प्रवर्तंते हव्यं कव्यं च सर्वशः ॥१२॥
सर्वे वेदाश्च देवाश्च तीर्थानि क्रतवोर्णवाः ।
वसंत्येव गवामंगेष्वतस्ता मंगलप्रदाः ॥१३॥

इति प्रावदन् प्राक्तना प्रज्ञावंतस्ततस्ताः प्रतिदिनं पोष्याः पूज्याः प्रणम्याश्च.

कंसः—वदंतु नाम प्राक्तनाः प्रज्ञावंतो न मे तद्वचः प्रमाणम् । युष्माकं गावो मंगलप्रदा अस्माकं पुनर्विष्णुमूल-

त्वादमंगलभदा एवेति ता हंतुमेवेहामहे वयम्.

वसुदेवः—हंत हंत! कोयमतिभूमिकामधिरूढो मतिमोहस्ते येन—

गावःकामदुघाःसमस्तजगतांशास्त्रेषुयाःकीर्तिताः
याभिः सर्वहविर्दुघाभिरखिलं भूमंडलं भूषितम्॥
अस्माकं यदुवंशजातजनुषां त्वेकं हि या दैवतं।
हा हा ता अपि हंतुमिच्छसि महामांगल्यमूर्ती-
र्मुदा ॥१४॥

कंसः—(सरोषं) अलमलमुपदेशदानदाक्षिण्येन.
गां समर्पय शीघ्रं मे श्रेय इच्छसि चेन्निजम्. ॥

देवकी—(स्वगतं) हा किमतःपरं भविष्यति!!

सरस्वती—वत्से! क्रूराशयाः किं न कुर्वंति?

भारतभूमिः—मातरेवमेतत्.

वसुदेवः—(सकोपाटोपम्)
कंस! नैवार्पयिष्यामि यद्विधेयं विधेहि तत् ॥
(इत्युक्त्वाखड्गंगृह्णाति.)

कंसः—(सभयं स्वगतं) हंतातिभूमिकामधिरूढोऽस्य कोप इदानीं । भवतु क्षणं विलंब्य कालोचितं करिष्यामि (प्रकाशं केशिनं प्रति) केशिन् पश्य पश्य वसुदेवस्ये-

मं सुहृद्धर्मं यः स्वयं सापराधोपि निरपराधेष्वप्यस्मासु-
विना कारणं कुप्यति.

केशी–( कंसस्य कर्णे ) एवमेवम्.

कंसः–वसुदेव ! " पुत्रान् समर्पयिष्येस्या यतस्ते भयमुत्थितं " इति यदुक्तं भवता तत्तथ्यमतथ्यं वा ?

वसुदेवः–तत्तथ्यमेव.

कंसः–

गामर्पय विना वादं तर्हि तच्छ्रेय इच्छसि ।
सनयं तनयं नो चेत्कीर्तिमंतं समर्पय. ॥१८॥

देवकी–( स्वगतं ) धन्यः कीर्तिमान् यो गोरक्षणनिदानतामुपगतः

वसुदेवः–नेति केनोच्यते (इत्युक्त्वाकीर्तिमंतं हस्ते गृहीत्वा) वत्स सकलमंगलकामधेनोर्धेनोरस्याः प्राणसंरक्षणाय त्वां त्वन्मातुलाय समर्पयामि.

कीर्तिमान्–आर्यचरणाः सज्ज एवास्त्ययं जनो गोरक्षणाय ( इत्युक्त्वा खड्गं गृहीत्वोत्तिष्ठति. )

कंसः–(सभयाशंकं) प्रथमोप्ययमष्टमकृत्यं करिष्यति किम् ? ( इतिविचारयंस्तूष्णींतिष्ठति. )

कीर्तिमान्–आः पापाः ! मयि जीवति गां क्रूरया दृशापि

द्रष्टुं कः शक्तः? शक्त एष मे करवालव्यालबालः खड्गः पापिनां प्राणानिलान् पातुम् (इत्युक्त्वा निष्कोशमसिं कृत्वा धावति.)

कंसकेशिनौ–(सभयं) वसुदेव! वसुदेव! किमेतत्.?

वसुदेवः–(कीर्तिमंतंबलाद्गृहीत्वा) वत्स! वत्स! नैवं कर्तुमुचितं ते। तथाऽऽचरिते त्वया मय्यसत्यवादिताऽऽविर्भूयात्सा च मे नरकप्रवेशद्वारतामुपेयात्। यतः पूर्वं 'पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितमिति' प्रतिज्ञातं मया कंसस्याग्रे। कंसोप्यष्टमाद्देवकीगर्भान्मे भयमस्तीति विचार्य मया समर्पितानपि युष्मान् षडपि सोदरान् न हतवान्। नायमल्पोस्त्युपकारो मयि कंसस्यास्य। इदानीं तु धेनोरसमर्पणेन क्रुद्धः कंसो धेनुं वा कीर्तिमंतं वा समर्पयेति मामाज्ञापयति ततोहं गोप्राणेभ्यः प्रतियच्छामि ते प्राणान्। तन्न्यस्तशस्त्रेण विनम्राशिरसा च क्षेयं त्वया महाराजस्याऽग्रे.

कीर्तिमान्–तात तात! विदितैतद्वृत्तांतोप्यद्य गोभक्तिभरावेशतया विस्मृत्यैतत्सर्वं यदकरवं बालचापलं तत्क्षंतव्यम् (इत्युक्त्वा खड्गं कोशशायिनं विधाय कंसमुपसृत्य) मातुल! मातुल! एष न्यस्तो मयाऽसिस्तवाग्रे नामितमि-

दमस्तैः समस्तैः सह मनोरथैर्मस्तकं मे तद्यथोचितमाचर

( इति वदन् विनम्रमस्तकस्तदग्रे तिष्ठति. )

कंसः–( सरोषं निष्कोशमासिंविधाय ) स्मर स्मरणीयं क्षणा-न्नभविष्यसि.

कीर्तिमान्–मातुल ! न कदापि विस्मृतिमुपयाति गोपाल-नप्रणयी श्रीगोविंदः । अयि मातापितरौ ! न मन्मरणेन हृदि दुःखं विधेयं न मे किंचिन्मरणदुःखं प्रत्युतानंद एवेदानीं हृदये कोप्युज्जृंभते । प्रार्थये च प्रणतजनप्रार्थि-तप्रदं श्रीपरमेश्वरं.

भूयो भवे भवेयं चेद्भवतोरेव चात्मजः ।
प्राणाः प्रयांतु गोविप्ररक्षार्थं मे भवे भवे ॥१६॥

( इत्युक्त्वा प्रणम्य मातापितरौ मौनमालंब्य तिष्ठति. )

कंसः–अरेरे वसुदेव! वसुदेव! क्षणं विचारय विचारय । प-श्वर्थे प्रियं पुत्रमपि प्रयच्छन् न लज्जसे ?

वसुदेवः–नास्माकं गोरक्षणात्प्रियः पुत्रो न पत्नी न स-र्वस्वं नापि जीवितं च.

सरस्वती–वत्से ! भारतभूमे! दिष्ट्या वर्धसे । विजयते वत्स-स्य वसुदेवस्य हृदयमणिमंदिरे गोभक्त्या समुपास्यमाना हृष्टा पुष्टा च वत्सा गोरक्षा । विलोक्यैनामलौकिकेन लो-

चनेन कृतार्थयात्मानं.

भारतभूमिः—मातर्विलोक्य देवीं कुशलिनीं गोरक्षां कृतार्थास्मि परमेनामुच्चाटयितुं पापोयं प्रवृत्तोस्तीति महती भीतिः

सरस्वती—कोयं वराको बद्धमूलामेनामुन्मूलयितुं वसुदेवहृदयसदनात्। निर्भया भव.

कंसः—( सरोषं ) केशिन् कीर्तिमतः शिरश्छित्त्वात्रानय.

केशी—यथाज्ञा ( इत्युक्त्वाकीर्तिमंतंग्रहीत्वासिंनिष्कासयति. )

देवकी—हा कुलदीपक ! कथमेवमकांड एव निर्वाणमुपैष्यसि ? प्रतिपालय मामहमपि सह त्वयाऽऽगच्छामि. ( इति वदंती मूर्च्छति. )

भारतीभारतभूम्यौ—वत्से देवकि! समाश्वसिहि समाश्वसिहि.

देवकी—(संज्ञामुपलभ्य) मातरौ ! गतं मे जीवनसर्वस्वं किमिव मे मनसः समाश्वासनस्थानं ? क्रूरः केशी कीर्तिमंतं गृहीत्वा गतः कां कामस्य दुर्दशां करिष्यतीति वेपते मे हृदयं.

( प्रविश्य. )

केशी—महाराज समनुष्ठितो महाराजनिदेशस्तदेतत्कीर्तिम-

तो मस्तकं ( इत्युक्त्वा कंसहस्ते मस्तकमर्पयति. )

कंसः–( मस्तकंगृहीत्वावसुदेवंप्रति. ) वसुदेव! पश्य पश्य गोरक्षाया गोभक्तेश्च फलमिदम्। अतः परमपि किमपि विंचार्य समर्पय धेनुम्.

वसुदेवो देवकी च–

गां तु नैवार्पयिष्यावः प्राणैः कंठगतैरपि ।
यानि देयानि दुःखानि तानि देहि न नौ भयम् ॥

कंसः–

सुषेणं भद्रसेनं च ऋजुं संमर्दनं तथा ।
भद्रं चापि हनिष्यामि यदि नार्पयितासि गां १८

सरस्वती भारतभूमिश्च–

देवकीवसुदेवौ च वत्सौ धैर्यं विधार्यताम् ।
नोपेक्षणीया गोरक्षा गोपालः शं विधास्यति ॥

( कोपाद् द्विव्यदेहे भूत्वा कंसंप्रति. )

रे कंस कर्मचांडाल हत्वापि भगिनीसुतम् ।
न लज्जसे धिग् धियं ते धिग् जनुर्जीवितं च धिक्
मृत्युस्ते देवकीपुत्रीभूताद्भूतात्मनो हरेः ।
ततस्तं प्रेषयिष्यावस्त्वरितं तव मृत्यवे ॥२०॥

पश्येदानीमेव क्षीरनीरनिधिं माप्ते आवां ( इत्युक्त्वाका-

शमार्गेण निष्क्रांते )

कंसकेशिनौ—हा!! किमेतदकस्मादापतितम्! (इतिवदं-तौभयात्स्खलंतौपततौनिष्क्रांतौ. )

देवकी—हा! दुर्भाग्यवशाद्दैव्यादपि प्रयातं.

वसुदेवः—एहि देवि! एहि गोप्राणपरित्राणसमर्पितप्राणतया संपादितगोलोकालौकिकानंदस्यापि वत्सस्य कीर्तिमतो लौकिकदृशा निवापांजलीन् कर्तुं श्रीयमुनां गच्छावः

देवकी—यथाज्ञार्यपुत्रस्य ( इत्युक्त्वा वसुदेवेन सह पुत्रैश्च निष्क्रांता.

॥ इति श्रीगोपालचिंतामणिविजये द्वितीयोंकः ॥

---

यस्य प्रेमकुमारिका सुजननी श्रीमोंघिवान्याभिधा
श्रीमाहेश्वरभट्ट उत्तममहामाहेश्वराग्र्यः पिता ।
श्रीमत्केशवशास्त्रिणश्च गुरवो मित्रं जटाशंकर–
स्तस्येयं कृतिराशु तुष्यतु तया श्रीमान् सदा शंकरः ॥

---

# ॥ अथ तृतीयोंऽकः ॥

( ततःप्रविशतिचिंतानिमग्नचेताउग्रसेनः. )

उग्रसेनः–( दीर्घमुष्णं च निःश्वस्य ) हा ! कुपुत्रताया अपुत्रतैव श्रेयसी । केन मे पापेन पापतमो मे पुत्रो जातो यो दीनाया दुःखविलीनाया देवक्या अपि षट् पुत्रान् काल इव निष्करुणो जघान। कीदृशोयं तस्य मनोमोहः कीदृशीयं तस्य क्षुद्रा बुद्धिः कीदृशी चेयं तस्याविमृश्यकारितेति बोधपदवीमेव नावतरति बुद्धिर्मे । हा ! पुत्रप्रणाशदुःखितां वत्सां देवकीं द्रष्टुमप्यपत्रपते चेतो मे कथं कथं तां समाश्वासयिष्यामि। एकस्यापि पुत्रस्य दैवनिर्मितं मरणं वीरधीरधुरीणानामपि धैर्यमेकपद एव ध्वंसयति किं पुनः षण्णां पुत्राणामकस्मादात्मसंबंधिनिर्मितानि मरणानि धैर्यस्थैर्यध्वंसं कुर्युरिति वक्तव्यम्। ( स्मृतिवशात्प्रत्यक्षामिव मत्वा. ) वत्से देवकि ! वत्स वसुदेव ! धन्यौ युवां धन्यौ युवयोः पितरौ धन्ये च युवयोर्जन्मजीविते याभ्यां युवाभ्यां जगन्मातुः श्रीधेनोः प्राणपरित्राणाय षण्णामपि पुत्राणां प्राणाः करालका-

 

लव्यालवङ्के बलितामुपनीताः। कोन्यस्तादृशं कर्तुं स्वप्नेपि शक्नुयात् ( इति वदन्नश्रूणि मुंचति ).

( प्रविश्य ).

प्रतिहारी–देव! द्वारदेशे देवकी समागता 'तातचरणान् द्रष्टुमिच्छामि' इति वदति। ततो देवाज्ञा प्रमाणम्.

उग्रसेनः–( सखेदं स्वगतं ) हा कथमिव दर्शयिष्यामि मुखं वत्सायै देवक्यै? भगवति वसुंधरे! नय मां स्वगर्भांतरे न शक्नोमि पुत्रपापेन मुखमपि दर्शयितुं देवक्यै. अथवा कान्येदानीं गतिः? कथं कथमपि धैर्यं संधार्य द्रष्टव्या देवकी ( प्रकाशं ) प्रतिहारि! प्रवेशय त्वरया देवकीं अहमपि तां द्रष्टुं सोत्कंठ एव.

प्रतिहारी–यथाज्ञा देवस्य ( इत्युक्त्वा निष्क्रम्य पुनर्देवक्या-सह प्रविशति ).

उग्रसेनः–( दूराद् देवकीं विलोक्य उत्थाय ) एहि वत्से एहि देवकि! देहि मे दर्शनम् ( इति वदन् प्रणमति ).

देवकी–अलं अलं तातचरणाः! युष्माकं गर्भरूपाया ममाऽग्रे कोयं युष्माकं विनयातिरेकः? (इति वदंती हस्ताभ्यां गृहीत्वा सिंहासन उपवेशयति। स्वयं च तत्समीप उपविशति).

उग्रसेनः–प्रतिहारि! स्वाधिकारमशून्यं कुरु.

प्रतिहारी–यथाज्ञा देवस्य ( इत्युक्त्वा निष्क्रांता ).

उग्रसेनः–वत्से! पापस्य कंसस्य पापेन परितप्ताशयोहं न क्वापि शांतिं लभे। हा! स्मृतिपथमुपगतान्यपि तस्य कृत्यानि ह्रेपयंति मां। हा! धिङ्ग मे वज्रादपि कठोरं हृदयं यद् वत्सायाः षण्णामपि पुत्राणां मरणानि श्रुत्वापि न सहस्रधा विदीर्णम्. ( इति वदन् मूर्छया पतति. )

देवकी–( ससंभ्रममुत्थाय पटांचलेन वीजयति ).

उग्रसेनः–( संज्ञामुपलभ्य ) वत्से! अलमलमायासेन दुष्पुत्रदुष्कृतदर्शनदुःखदग्धस्येयमेव दशा मे शांतिकरी नान्या ( इति वदन् पुनरश्रूणि मुंचति ).

देवकी–तातचरणास्तातचरणाः किमेतद्विधीयते? युष्मास्वेवं धैर्यवैधुर्यमालंबमानेषु कोऽपरो मह्यमर्पयिष्यति धैर्यं?

उग्रसेनः–( अश्रूणि प्रमार्ज्य ) वत्से! जानामि सर्वं जानामि तथापि किं करोमि न बालास्ते विस्मृतिमुपयांति.

देवकी–तातचरणाः! अलमतीतविषयचिंतयाऽनागतविषयचिंतैवेदानीं विधेया.

उग्रसेनः–कासाऽनागतविषयचिंतास्तीत्युच्यताम्.

देवकी–तातचरणाः! गोप्राणरक्षणार्थे मृतानपि तान् मे पुत्रानमृतानेव मन्येहं ततो न शोचामि तान्। परमद्या-

प्यनार्द्रहृदयः कंसः पुनरपि गां गृहीतुमागमिष्यतीति श्रूयते तदवसरे गोरक्षणाय युद्ध्यन्तं लज्जामातरं मां च निहस क्रूराशयः स तस्या वधं करिष्यति चेत्तर्हि किं मृसवे समर्पितैः पुत्रैः किं गोरक्षणार्थं मृतेन मे पत्या किं च मृतयापि मया फलं? सर्वं निष्फलं। ततो भ्राता मे कंसो गोभक्तिकरो यथा स्याद् गोरक्षाकरश्च यथा स्यात्तथा तातचरणैस्तस्मै सदुपदेशो देय इति मेऽभ्यर्थना.

**उग्रसेनः**–( दीर्घमुष्णं च निःश्वस्य. ) वत्से देवकि! क उपदेशं शृणोति यस्मै दीयेत? सदुपदेशश्रवणं तु तस्य श्रवणयोः शूलायते सत्संगोपि न तस्मै रोचते। हा हंताहर्निशं गोब्राह्मणपीडनपरैरसुरैः सहैव संगतिस्तस्य संवर्द्धते द्वेषश्च स्वकुल्येषु यादवेषु गोषु ब्राह्मणेषु च। तथापि यावद्बुद्धिबलोदयं तस्य हृदये गोभक्त्यभ्युदयाय यया कयापि युक्त्या प्रयतिष्ये.

**देवकी**–तातचरणाः! सफलास्तु युष्मन्निर्मिता सा कापि युक्तिर्गच्छाम्यहमिदानीं कारागृहं यथाकथंचित्प्राप्तनिर्गमना तातेभ्य एतन्निवेदयितुमेवागताऽऽसम् ( इत्युक्त्वा निष्क्रांता ).

**उग्रसेनः**–( स्वगतं ) गता वत्सा देवकी। यस्या धेनोः संर-

क्षणाय पुत्रषट्कमपि ताभ्यां समर्पितं तामेव धेनुं यदि क्रूरः कंसो गृह्णीयाच्चेत्किमतः परं दुःखनिदानं? परं विपरीतमतिः स खलु न मद्वचनानि श्रोष्यति ततो गोभक्त्यभ्युदयकरं किमपि प्रेक्षणकं निर्माय तदभिनयदर्शनेन कंसस्य हृदये गोभक्तिरेवोत्पादनीया तद्देवसेवागृह उपविश्य रहसि सर्वं लिखामि (इति निश्चित्य प्रकाशं) द्वारपाल!

द्वारपालः–( प्रविश्य ). आज्ञापयतु देवः ।

उग्रसेनः–देवसेवागृहमेवेदानीं गंतुमिच्छामि. तस्मात्तन्मार्गं दर्शय.

द्वारपालः–यथाज्ञा देवस्य ( इत्युक्त्वा ) इत इतो देवः ( इति सह राज्ञा निष्क्रांतः )

( ततः प्रविशति क्षीरनीरधितीरनिषण्णा पूतना ).

पूतना–( स्वगतं ) राजभक्तिभरधुरंधरो हि महामात्यः केशी। तेन हि वसुदेवगृहे समागतयोः कयोश्चिद्देवतयोः कंसं प्रति—

"मृत्युस्ते देवकीपुत्रीभूताद्भुतात्मनो हरेः ।
यत्तत्त्वं प्रेषयिष्यावस्त्वरया तव मृत्यवे ॥"

इति दुःश्रवं वचनं निशम्य सचिंतेन रहस्याहूयाज्ञप्ता-

स्मि यद् 'वत्से पूतने! क्षीरसागरे शेषशायिनं नारायणं प्रति गत के अपि देवते "भगवन् त्वरया भवता देवकी-पुत्रता स्वीकार्या" इति च प्रार्थयिष्यतश्च तां। तयोः प्रार्थनया च नारायणोपि स्वयं देवकीपुत्रतां प्राप्तुं सत्वरतरो भ-विता तदवसरे गृहीतलक्ष्मीस्वरूपया त्वया त्वसन्निहि-तायां लक्ष्म्यां कयापि युक्त्या देवकीपुत्रभावविमुखो विधेयो महाविष्णुरिति' तदत्रागताहं गृहीतं च मया ल-क्ष्मीस्वरूपं इदानीमसन्निहितलक्ष्मीकमवसरं प्रतिपाल-यामि ( इत्युक्त्वातीरतरुतलमाश्रित्योपविशति ).

( ततः प्रविशति कश्चिद्विप्रवेषोऽसुरः )

**ब्राह्मणः**—( परितोवलोक्य स्वगतं. ) ब्राह्मणरूपग्रहणपरतंत्र-तया न भक्षिताश्चिरान्मत्स्याः। निर्जनं चैतत्स्थलं तद-स्मिन्नेव सरसि स्नानमिषेण मत्स्याशनसुखमनुभवामि. ( इति शीघ्रं सरसि समुत्तीर्य )

नारायणाय हरयेस्तु नमो नमस्ते ( इत्युक्त्वा निमज्य म-त्स्यं निगीर्य च )

सर्वात्मने भगवतेस्तु नमो नमस्ते ( इति पुनर्निमज्य मत्स्यं निगीर्य च )

श्री विष्णवे नम इदं मुहुरस्तु तुभ्यम्.

पूतना–(स्वगतं) कश्चिद्विष्णुभक्तो ब्राह्मणोऽयं तमुपेत्य पृच्छामि भगवद्गृहप्रवृत्तिं. (इति समीपमुपेत्य प्रकाशं) महाविप्र महाभक्तोसीति प्रतिभगवन्नामोच्चारणं रुद्धकंठतयानुमीयसे.

ब्राह्मणः–(अनाकर्णितकेन) हे कृष्ण कृष्ण भगवन् भवते नमोऽस्तु (इति वदन् मत्स्यमश्नाति.)

पूतना–(स्वगतं) विलोक्य बाह्यरंगेनैव वंचितास्मि नायं मे विजातीयः कोपि सजातीय इव प्रतिभाति (प्रकाशं) ननु भगवत्सेवकोसीति पृच्छामि केदानीं भगवद्गृहप्रवृत्तिरिति.

ब्राह्मणः–(सभयाशंकम् परावृत्यावलोक्यच) मातर्नाहं बको ब्राह्मणः पूतनामानंदेन त्वां प्रणमामि (इति वदन् प्रणमति.)

पूतना–(ससंभ्रमं) किं रे बकसेवक! महालक्ष्मीमपि मां पूतनां जानासि? धिक् त्वां निःसरास्मादस्मत्सरसः।

ब्राह्मणः–केन त्वं पूतनेत्युच्यते? पूतनामा ब्राह्मणोहं त्वामानंदेन प्रणमामीति मयोक्ते त्वया पूतनेत्यर्थो गृहीतस्ततस्तेनैवाचारेण नूनं त्वं पूतनैवासीति मे निश्चयः

पूतना–मयापि भगवत्सेवकोसीत्युक्ते नाहं बकः किं तु

ब्राह्मणः पूतनामास्मीति वदतस्तवैतेनाचारेणाहारेण च त्वमपि नूनं बक एवासीति मे निश्चयः ।

ब्राह्मणः–तर्हि अलं परस्परतः स्वस्वरूपापह्नवप्रयासेन । मातः पूतने सोहं बक एवास्मि.

पूतना–भ्रातरहमपि पूतनैवास्मि । परं कथं तवात्रागमनं ?

ब्राह्मणः–महामात्यस्य केशिनो निदेशेनाहमत्रागतोस्मि.

पूतना–महामात्येन किं कार्यमुद्दिश्य प्रेषितः ?

बकः–नारायणं प्रति गते के अपि देवते किं प्रार्थयतो नारायणश्च ताभ्यां किं कथयतीति गृहीतभगवद्भक्तब्राह्मणरूपस्त्वं सर्वं श्रुत्वात्रागच्छेति.

पूतना–( स्वगतं ) महामात्यस्य सैव महती चिंता ( प्रकाशं ) ततस्ततः ?

बकः–ततो गृहीतब्राह्मणवेषेण श्रुतानि सर्वाणि करुणाजनकानि भारतीभारतभूम्योः प्रार्थनाशतानि.

पूतना–ततस्ततः ?

बकः–ततः संजातातुलदयोदयो दयोदधिर्नारायणः शीघ्रमेव देवकीपुत्रतामुपैष्यामीति प्रतिज्ञातवान्.

पूतना–ततस्ततः ?

बकः–ततो गते ते देवते निजं स्थानमिदानीमेव. भगवांश्च

गोब्राह्मणदुःखश्रवणखिन्नतया गतनिद्र इदानीमेव किंचिन्निद्रासुखमनुभवति.

पूतना–लक्ष्मीः किं कुरुते. ?

बकः–लक्ष्मीस्तु ब्राह्ममुहूर्त्तत्वादुत्थाय स्नात्वा स्फटिकमणिमयेस्मिन्मंदिरे निजकरकमलस्थापितं श्रीलक्ष्मीनारायणेश्वराभिधानं श्रीपार्वतीप्राणेश्वरं पूजयितुं गता. इत्येषा तत्रत्या प्रवृत्तिः। त्वया पुनः कुत आगम्यते कुत्र गम्यते च?

पूतना–अहमप्यमात्यकेशिन एवाज्ञयात्रागतास्मि. असन्निहितलक्ष्मीके समये लक्ष्मीस्वरूपया मया कयापि युक्त्या देवकीपुत्रताप्राप्तिविमुखो विधेयो महाविष्णुरित्याज्ञाऽमात्यस्य.

बकः–तर्ह्यवसरोयं ते तत्र गंतुं। तत् साधय त्वं स्वकार्यसिद्ध्यै। अहमपि निवेदयितुमिमं वृत्तांतं साधयाम्यमात्यसमीपम्. (इत्युक्त्वा निष्क्रांतौ बकीबकौ.)

(ततः प्रविशति मणिमयपर्यंकसुप्त उत्स्वप्नायमानः श्रीनारायणः श्रीमहालक्ष्मीपर्यंकोपविष्टा महालक्ष्मीवेषा पूतना च.)

श्रीनारायणः–(स्वप्नप्रलापमभिनयन्)

हे गंगे यमुने सरस्वति पयः संपीयतां यामुनम्

गोदे गोमति गौरि शाड्वलमिदं कामं समास्वाद्यताम्
सर्वाः कामदुघाः समाश्रयत रे भांडीरकाख्यं वटं
धीरे धीवरि धूसरे धवलिके हे कालि कालाक्षिके॥

मायालक्ष्मीः–(स्वगतं) स्वप्नं कमप्यमनुभवति भगवान्। भवतु श्रोतव्यमेतदपि क्षणं धैर्यमालंब्य. (इति तूष्णीं तिष्ठति.)

श्रीनारायणः–सुदामन् सुदामन्! चंद्रप्रभा दूरंगता तद्गच्छ गच्छ निवारयैनाम्.। सुबल सुबल! वहुलेयं वहुलं घनं वनं भ्रांता श्रांता च ततस्तस्याः पादसंवाहनं कुरु। स्तोक स्तोक! स्तोकं स्तोकमिंद्रनीलमणिनीलं शाड्वलकवलं गृहीत्वा प्रयच्छास्यै सुरभये। अशोक! अशोकतरुतलच्छायानिषण्णां गौरीं तूर्णं तूर्णं मत्समीपमेवोपानय न दूरस्थायां तस्यां मह्यं किमपि रोचते.

मायालक्ष्मीः–(सावेगं श्रीनारायणीयं चैलांचलमाकृष्य) प्राणनाथ! प्राणनाथ! का स्वप्नगतापि त्वामेवमायासयति? नास्त्यत्र चंद्रप्रभा बहुला सुरभिर्गौरी वा काचित् परं दुर्घटकपटघटनातिपटोः प्राणनाथस्य कपटपाटवं प्रकाशितममुना स्वप्नेन। वंचिताहं खलु मिथ्योपचारचतुरेण प्राणप्रियेण.

श्रीनारायणः–( समुत्थाय निमीलितनेत्र एव ) हा गतं किमपि मनोवचोऽगम्यं रम्यं सुखं मे.

गंगे गोमति गौरि कालि कमले कालिंदि चंद्रप्रभे
क्व स्यान्मे भवतीभिरुत्तमतमानंदप्रदः संगमः।
श्रीदामन् प्रियमित्र गोकुलमिदं गोगोपगोपीकुलं
तीरं चापि कलिंदशैलदुहितुर्द्रक्ष्यामि भूयः कदा॥

( इति निमीलितनेत्र एव पठति ).

मायालक्ष्मीः–( पुनःसरोषं ) नाथ! नाथ! कोयमलौकिकः प्रलापो योजाग्रवदवस्थायामपि न विरमति.

श्रीनारायणः–( नेत्रे समुन्मील्य सर्वतो विलोक्य दीर्घमुष्णं निःश्वस्य च ) प्रिये! निद्रामुद्रां विद्रावयंत्या त्वया व्यर्थमेवापहृतं किमप्यलौकिकं सुखं मे। परं प्रेयस्याः प्रेमपरतंत्रोयं जनो महत्यस्मिन्नपराधेऽपि किं कुर्यात्. ?

मायालक्ष्मीः–( साश्रुधारासारापातम् ) त्यज्यतां पापेयमपराधिनी। रमस्व च चंद्रभागाद्याभिः सह सहस्रं वत्सराणां याः स्वप्नेपि न मुञ्चंति त्वाम्.

श्रीनारायणः–प्रिये! प्रिये! किमर्थमेवं व्यर्थमेव क्लेशाश्लेषार्ततामुद्वहसि ? मया किमप्यन्यदुच्यते त्वया किंचिदन्यदेव तर्क्यते अविमर्शवादिता हि निसर्गो मानिनी-

नामिति लोकोक्तिर्युक्तेति मन्येहम्.

मायालक्ष्मीः–( स्वगतं ) अतिभूमिकामधिरूढो रोष इदानीमस्य ततः सांत्वनमेव सांप्रतं सांप्रतं ( प्रकाशम् ) प्राणनाथ! क्षन्तुमर्हसि मंतुमिमं दीनायास्त्वत्पदपद्मदास्या मे। ज्ञातुमिच्छामि प्राणनाथेन स्वप्नेनुभूयमानस्य कीदृशस्य सुखस्य भंगः पापया मया कृत इति.

श्रीनारायणः–प्रिये! जानास्येव यन्मथुरायां कंसेन हतं देवकीपुत्रं कीर्तिमंतं विलोक्य विषादविषोदधिमग्नया श्रीभारत्या भारतभूम्या च देवकीपुत्रो भवेति प्रार्थितोहम्.

मायालक्ष्मीः–जानाम्येव तत्सर्वं। ततः किम्?

श्रीनारायणः–ततो मया गोरक्षणाय देवकीपुत्रत्वमवश्यमंगीकर्तव्यम्.

मायालक्ष्मीः–अत्र कः संदेहो गोरक्षणमेव देवस्य परमो धर्मस्ततस्ततः?

श्रीनारायणः–प्रिये! ततो मया गोपालबालवेषेण गोपालबालैः सह गोपालनं कर्तव्यम्.

मायालक्ष्मीः–युक्तमेवैतदापि। ततस्ततः?

श्रीनारायणः–श्रीयमुनातीरे गोचारणसुखमीदृशमहम-

नुभविष्यामीति चिंतयता सुप्तेन मया तदेवालौकिकं सुखं स्वप्नेऽनुभूतम् । तत्र तानि तानि गोनामानि गृह्णन् त्वयाऽहमभुक्तपूर्णसुख एव प्रबोधितो। विचारणीयं देव्या स्त्रीस्वभावलाघवात्कीदृशं मे सुखमपहृतमिति.

मायालक्ष्मीः—नाथ ! सोयं महानपराधो मे स्त्रीनामसाम्यात् । स्त्रीस्वभावसुलभलाघवाहं तत्तत्संज्ञासु स्त्रीष्वासक्तचित्तं भगवंतं मत्वा रोषात्त्वाबोधयं । क्षंतव्यं स्त्रीस्वभावचापलमेतत्.

श्रीनारायणः—देवि ! क्षान्तमेव । किमेतदपि वक्तव्यम् ?

मायालक्ष्मीः—प्राणनाथ ! गोरक्षणमेव देवस्य धर्म इति निःसंशयं वेद्मि तथापि किंचिद्विज्ञापयितुमीहे.

श्रीनारायणः—किं तत् ?

मायालक्ष्मीः—देव ! गोरक्षणाय शंखश्चक्रं गदा पद्मं वा पृथिव्यामवतरतु करोतु च यथात्वदिच्छं गोरक्षणम्.

श्रीनारायणः—देवि ! तान्यन्यानि कार्याणि यानि मदायुधावतारेण मत्पार्षदावतारेण वा साध्यानि इदं तु मयैव स्वयं साधनीयम्.

मायालक्ष्मीः—(स्वगतं) अहो गोरक्षणे बद्धाग्रहता ( प्रकाशं ) नाथ ! त्वदाज्ञया त्वदायुधं त्वत्पार्षदश्च पृथि-

व्यामवतीर्य यथात्वदिच्छं कर्तुं शक्नोस्येव.

श्रीनारायणः–मदाज्ञया मदायुधावतारो मत्पार्षदावतारो वा यथामदिच्छं कर्तुं शक्त एव तथापि गोरक्षणं तु मयैव पृथिव्यामवतीर्य कर्तव्यम्.

मायालक्ष्मीः–सोयं दुराग्रहो नाथस्य यच्चतुर्दशभुवनमंडलपालकोपि केवलं गोपालबालकतामंगीकर्तुमिच्छसि।

श्रीनारायणः-चतुर्दशभुवनपालकस्यापि गोपालनाय गोपालबालकतांगीकरणं भूषणम् न तु दूषणम्.

मायालक्ष्मीः–ननु दूषणमेव न भूषणम् चिंतनीयं। चिंतनीयं चिरं चित्ते चित्तेश्वरेण मे। क्व सकललोकपाललोभनीये महामणिमयेस्मिन् लोके निवासः क्व भूलोके निवासः। क्व नानानर्घ्यतमसमस्तमणिमयालंकारधारणम् क्व गुंजापुंजालंकारधारणम्। क्व शंखचक्रगदापद्मधारणं क्व वेत्रविषाणवेणुधारणम्। क्व ब्रह्मरुद्रेंद्रप्रमुखमखभुग्भिः सह गोष्ठीरसानुभवः। क्व ग्राम्यैः पामरैर्गोपालबालकैः सह गोष्ठीरसानुभवः। क्व निखिलब्रह्मांडमंडलपरिपालन लालनपोषणचिंता क्व केवलं गोकुलगतगोकुलपरिपालनलालनपोषणचिंता। क्व नानामणिगणखचितसुवर्णपात्रेषु सुधारसनिर्विशेषस्वादीयांसि कमलासमक्रमलास-

हचरीकरकमलार्पितानि विविधानि भोजनानि क्व मृच्छिलाशिक्यभाजनेषु मलिनवल्लवीकरपल्लवपरिवेषितान्यम्लतमानि दध्योदनभोजनानि । क्व हरिचंदनांगरागः क्वानेकविधगिरिधात्वंगरागः । क्व पीतांबराद्यमूल्यदुकूलवसनानि क्व कंबलवसनानि । क्व हरिकरिनरनौकाकनकरथैः पर्य्यटनम् क्व निष्पादुकाभ्यां पद्भ्यां पर्य्यटनम् । क्व कल्पपादपनिकुंजेषु परिभ्रमणं क्व सर्जार्जुनखर्जूरतालतमालहिंतालकदंबकदंबेषु परिभ्रमणं चेति।

श्रीनारायणः–प्रिये प्रिये ! यानि यानि त्वया दर्शितानि दूषणानि तानि तानि गोपालनपरायणतया मे भूषणान्येव। गोपालनेन सर्वाण्यपि भूतलनिवासदुःखानि सुखान्येव। गोपालनं विना च सर्वाण्यपि वैकुंठवाससुखानि दुःखान्येवेति मन्येहम्.

मायालक्ष्मीः–( सरोषं ) विपरीते विधौ विपरीतमेव सर्वं भासते। किं कदाचित्सार्वभौमः कोपि गोपालकतामंगीकर्तुमिच्छेद्विना विधिवैपरीत्यं ? यदि मद्वचनानि न प्रगणय्य गोपालबालकतामंगीकरिष्यसि तर्हि विषपानेनोद्बंधनेन भृगुपातेन चिताप्रवेशेन वा प्राणाँस्त्यक्ष्यामि। किं महालक्ष्मीप्राणप्रियोपि गोपालबालतां कदाचिदप्यर्हति?

( इति वदंती बाष्पवारां धारां मुञ्चति )

**श्रीनारायणः–**

**क्षीरनिधेः संबंधाच्चित्तमरालेन मे मरालीति।**
**ज्ञाता या हा! सेयं बकीति निश्चीयते वचनैः॥**

हा! वंचितोहं गोरक्षणाविपक्षपक्षपातिन्या निःसीमानुतापपात्रतामनुभवामि ( इतिवदन् पर्य्यंकादुत्तिष्ठति ).

**मायालक्ष्मीः**–( स्वगतम् ) हा! ज्ञाताहममुना बकीति तदपसरणमेव युक्तं नचेच्चक्रेण मे शिरश्छेत्स्यति ( इति पलायितुमिच्छंती क्षणं विचार्य) अथवा घुणाक्षरन्यायेनेयमुक्तिस्तदीया (प्रकाशम्) प्राणनाथ! प्राणनाथ! मद्वचनमुल्लंघ्य गोपालबालतामंगीकुर्याश्चेत्प्राणाधिकप्रियस्येष्टदेवस्य ते पार्वतीप्राणवल्लभस्य शपथः।

**श्रीनारायणः**–पापे! पापप्रवृत्त्यानया मया सह शतवर्षावधिर्वियोगोतिदुःखदो भवतु ते ( इतिवदन्निष्क्रांतः ).

**मायालक्ष्मीः**–हा! कृतोपि प्रयासो मे निष्फल एव जातः। इदानीं त्वरितं पलायनमेवोचितं ( इति वदंती निष्क्रांता ).

( ततः प्रविशति श्रीलक्ष्मीनारायणेश्वरं स्तुवंती महालक्ष्मीः )

**महालक्ष्मीः–**

**श्रीशैलराजतनयाहृदयाधिनाथ**

श्रीशंकर ! प्रणतवत्सल ! हे कृपालो !
मां पाहि पाहि मम पाहि च जीवितेशम्
नित्यं दयामृतमयाशय ! दीनबंधो ॥
देवाधिदेव ! करुणाकर ! दीनबंधो !
भक्ताभिवांछितसमर्पणबद्धबुद्धे ! ।
हे शैलजाहृदयवल्लभ ! सांब ! शंभो !
मां पाहि पाहि मम पाहि च जीवितेशम् ॥

श्रीनारायणः–( प्रविश्य कर्णं दत्वा साश्चर्यम् ) कुतोत्राप्यागता लक्ष्मीः ! न तस्या गोरक्षणविमुखवृत्तेर्मुखमपि विलोकनीयम् । कथं च भगवंतं श्रीभवानीवल्लभं न प्रणम्य गंतव्यम् ? भवत्वत्रैव क्षणं स्थित्वा गतायां तस्यां श्रीमहेश्वरं प्रणम्य देवकीपुत्रतां गंतुं प्रस्थास्ये ( इति वदन् तिष्ठति ).

महालक्ष्मीः–

हे पार्वतीहृदयदेव ! सदा मदीया
बुद्धिर्मदीयहृदयेशपदैकबद्धा ।
भूयात्कदापि न तदाशयतो विरुद्धा
शंभो ! त्वदीयदययेति परार्थना मे ॥

श्रीनारायणः–( स्वगतं ) मन्ये पश्चात्तापमेषाऽनुभवति.

महालक्ष्मी:-

अनुजनुर्मम मानसमीश ! हे
हृदयदैवतदैवतमस्त्विदम् ।
मयि च तस्य दयार्द्रमतेर्दया-
दृगनुवासरमुल्लसतु प्रभो: ॥

श्रीनारायण:-( स्वगतं ) अन्यादृशैवाऽस्या: कोमलतरा सूक्ति:

महालक्ष्मी:-

सर्वत्र तस्य विजयाभ्युदयोदयो मे
नाथस्य नाथ ! भवतो भवतु प्रसादात् ।
विश्वाधिनाथ ममनाथविपक्षिपक्ष-
च्छेदश्च तेऽस्तु दययाऽनुदिनं दयाब्धे ॥
लोकोत्तरो भवतु कोपि यश:प्रकाश:
प्राणप्रियस्य मम देव ! दयादृशा ते ।
तस्यांघ्रियुग्ममरा: प्रणमंतु नम्रा
इंद्रादयोप्यनुदिनं शुभभक्तियुक्ता: ॥

श्रीनारायण:-क्षणेनैवेयं काप्यन्या जाता !!

महालक्ष्मी:-( सबाष्पं दंडवत्प्रणम्य ).

आबाल्यतोद्यदिवसावधि यत्त्वदीयं

शंभो! मनोवचनकर्मभिरेकरूपैः ।
आराधनं शिव! मया कृतमस्ति तेन
प्राणप्रियस्य विजयाभ्युदयो ममाऽस्तु ॥

श्रीनारायणः–( प्रकाशं ).
हेशर्वरीरमणमौलिमणेऽद्रिकन्या-
प्राणप्रिय! प्रणतवत्सल! विश्वबंधो! ।
अस्या मनस्तु भवतो निकटेस्ति यादृक्
तादृक् सदा भवतु देव! मम प्रियायाः ॥

( इति वदन् प्रणमति ).

महालक्ष्मीः–( साश्चर्यानंदं ) अहो किं प्राणनाथः प्राण-नाथ प्राणनाथ! प्रणमति पदपद्मदासी ते.

श्रीनारायणः–सदैव मद्विचाराविरुद्धविचारा भूयाः ।

महालक्ष्मीः–( स्वगतं ) अन्यादृशोयमाशीःप्रकारो, भवतु क्रमेण ज्ञास्यामि ( प्रकाशम ) भगवन्ननुदित एव भगवति भास्वति क गम्यते प्राणनाथेन ?

श्रीनारायणः–देवि! विदितमेव देव्या यद्गोरक्षणाय देवकीनंदनत्वमंगीकृत्य नंदव्रजे गोपालबालकत्वं स्वीकार्यं मया.

महालक्ष्मीः–प्राणनाथ! यद्येवं तर्हि मयापि श्रीनंदनंदनं

त्वामाराधयितुं कयापि गोपालबालिकया भाव्यम् तदनुजानीहि मां सह गमनाय.

**श्रीनारायणः**–(साश्चर्यं स्वगतं) कथमेषा क्षणात्पूर्वं किमप्यन्यदवदत् सांप्रत च किमप्यन्यद्वदति (प्रकाशम्) देवि! "यर्हि गोपालबालत्वं स्वीकर्त्तासि स्वयं प्रभो। तर्हि त्यक्ष्याम्यहं प्राणान् विषेणोद्बंधनेन वा" इति कृतप्रतिज्ञायास्तवेदानीमिदं वचनमाश्चर्यं कुरुते.

**महालक्ष्मीः**–प्राणनाथ! कदा वा मयैवमुक्तम्?

वाराही नारसिंही च याहं प्रीत्या पुराऽभवं।
तस्या गोपालबालत्वे विरुद्धा स्यात्कथं मतिः?॥

इति चित्ते चित्तेश्वरेण चिरं चिंतनीयम्। किं च.

आबाल्यतोऽद्यदिवसावधि जीवितेश!
स्वप्नेपि नास्ति भवतो विमुखी मतिर्मे।
साक्ष्यत्र सोऽयमचलेंद्रसुतासहायः
श्रीशंकरः सकललोकगुरुर्दयाब्धिः॥

(इत्युक्त्वा सास्त्रं श्रीनारायणपादयोः पतति).

**श्रीनारायणः**–(साश्चर्यं स्वगतं) किमेतत्? केयं माया मामपि मोहयति? (प्रकाशम्) देवि! यद्येवं तर्हि सर्वज्ञः स एव देवो मदीयां भ्रांतिमपाकरिष्यति.

( नेपथ्ये ).

श्रीमन्नारायण ! स्वीयां प्राणप्रियतमां रमां ।
मावमन्यस्वैकरूपां मनोवचनकर्मभिः ॥
मायालक्ष्मीस्वरूपा सा पूतनोक्तवती पुरा ।
गोरक्षणविरुद्धं तत्सर्वमित्यवधारय ॥

श्रीनारायणः–( स्वगतं साश्चर्यं ) सर्वज्ञेन जगद्गुरुणा शंकरेण मूलत एवोन्मूलिता मे मनोभ्रांतिः ( प्रकाशम्. )

हर हर हर हा हा पूतना पापिनी सा
प्रणयिनि ! शयनस्था त्वत्स्वरूपानुरूपा ।
अकृत कपटमेतत्तेन जातोऽपराधी
त्वयि हृदयसमायां किं करोमि क्व यामि ॥

( इतिरुदन्नश्रूणि मुंचाति. )

महालक्ष्मीः–प्राणनाथ! प्राणनाथ! किमेतत्कोयमपराधः? पापायास्तस्या वचसा यदि भ्रांतिर्जाता तेन न प्राणनाथोऽपराधी किं तु सैवापराधिनी ! न तद्विषयं मन्मनसि किमप्यौदासीन्यम् वर्तते ततो न प्राणनाथेनाप्येतद्विषयमौदास्यं धार्यम्.

श्रीनारायणः–( सनिःश्वासं ) प्रिये ! न केवलं भ्रांतिमात्रेणापराधी भ्रांतिभूताभिभूतेन मयान्यदपि ते महद-

पराद्धं.

महालक्ष्मीः–नाथ ! किं तत् ?

श्रीनारायणः–प्रिये ! गोरक्षणविरुद्धान्यक्षराणि श्रुत्वा रोषात्.

गोरक्षणविरुद्धांधबुद्धेर्वर्षशतावधिः ।
त्वया सह्यास्तु विरहो दुःसहो दुःखदश्च ते ॥

इत्युक्तम्

महालक्ष्मीः–हा हतास्मि याहं क्षणमपि प्राणनाथविरह-दुःखं सोढुमक्षमा सा कथं शतं वर्षाणि प्राणनाथविरहं सहिष्ये. (इत्युक्त्वा मूर्छया पतति.)

श्रीनारायणः–(सास्रं) प्रिये ! समाश्वसिहि समाश्वसिहि. (इतिवदन् पटांचलेन वीजयति.)

महालक्ष्मीः–( संज्ञामुपलभ्य ) प्राणनाथ ! अलमलमायासेन विरम विरमास्मात्परिश्रमात्.

श्रीनारायणः–क इवात्र परिश्रमो ? मज्जामि लज्जाब्धौ महापराधमिममात्मनः स्मारं स्मारं किं करोमि क यामि ? (इतिवदन्नश्रूणि मुंचति.)

महालक्ष्मीः–प्राणनाथ ! शापप्रदानेपि न प्राणनाथस्य दोषः किं तु ममैवापराधः ।

श्रीनारायणः–कथमिव ?

महालक्ष्मीः–पूतना मद्रूपं गृहीत्वा गोरक्षणविरुद्धान्यक्षराणि वक्तुं शक्ताभूत्तदेव पूर्वसंचितस्य कस्यचित्पापस्य विलसितं मे। अन्यथा गृहीतमद्वेषायाः पूतनाया अंतःकरणमपि गोरक्षणप्रेमप्रवणमेव स्यात्ततो युक्तमेव कृतं नाथेन.

श्रीनारायणः–पतिव्रताशिरोमणे ! प्राणप्रिये ! शोभत एवैवं वक्तुम् नैसर्गिकेणामुना ते सारल्येन प्रसन्नोहं जन्मत एकादशवर्षावधि त्वया सह सहवाससुखं तादृशमर्पयिष्यामि यत्स्मरणानंदेनापि शेषाणि विरहवर्षाणि क्षणमिव निर्गमिष्यंति । किं च तव महापराधिनीं पूतनां प्रथममेव प्रणाशयिष्यामि.

महालक्ष्मीः–महाननुग्रहोयम् (इत्युक्त्वा प्रणमति.)

श्रीनारायणः–प्रिये ! देवकीजठराज्जन्म गृहीत्वाहं श्रीगोकुले श्रीनंदयशोदानंदनतामंगीकरिष्यामि त्वयापि च श्रीगोकुले वृषभानुनंदिन्या भाव्यं तदेहि परमेश्वरं प्रणिपत्य प्रस्थास्यावहे.

महालक्ष्मीः–यथाज्ञा प्राणनाथस्य. (इत्युक्त्वा भगवता सह निष्क्रांता.)

इति श्रीमत्केशवकृपाकल्पवल्लरीपल्लवायमाने गोपालचिंतामणिविजयनाम्नि नाटके तृतीयोंकः

श्रीमत्सूर्यकुमारिकासुजननीश्रीविठ्ठलेशःपिता
यस्यभ्रातरउत्तमोत्तमगुणाःश्रीझंडुभट्टादयः ॥
श्रीमत्केशवशास्त्रिणश्चगुरवोमित्रंकविःशंकर
स्तस्येयंकृतिराशुतुष्यतुतयाश्रीमान्सदाशंकरः॥



# ॥ अथ चतुर्थोऽङ्कः ॥



## ( गर्भांकः )

( ततः प्रविशति केशिनऽमात्येन सह नाटकशालायां कंसः ).

कंसः—केशिन् ! अप्सरसो विदेशीया नाटकानि बहून्यभिनयन्ति तद् द्रष्टव्यं वत्सेन ताभिरभिनीतमेकं नाटकमिति पितृपादैराज्ञप्तोऽहमिदानीं । ततोत्र प्राप्तोस्मि । परं केनाशयेन तातपादैरेवमाज्ञप्तोऽहमिति न जाने.

केशी—( बद्धांजलिरुत्थाय ) राजाधिराज ! निखिलेप्यत्रानिवलये त्वदीयो हितैष्यस्मत्कुटुंबं विना नान्योस्तीति निःशंकमवगंतव्यम्.

कंसः—जानाम्येव । ततः किम् ?

केशी—तेन हि तातपादा अपि ते रिपुपक्षपातिन इति मंतव्यम्.

कंसः—नैतत्संभवति पितृपादानाम्.

केशी—एवं चेन्नाटकमेव तदीयमाशयं निवेदयिष्यति यद्दर्शनायाग्रहात्तातपादैराज्ञप्तो महाराजः ।

कंसः—भवतु विलोक्य विचारयिष्यावः । इदानीं प्रेक्षण-

परैर्नरैर्नरेश्वरैश्च संकुलं स्थलमिदं तदादिश्यन्तामभिनयोपक्रमायाप्सरसः ।

केशी–यथाज्ञा देवस्य । सूत्रधार ! ( इत्युक्ते )

सूत्रधारः–आज्ञापयत्वमात्यः ।

केशी–सर्वे प्रेक्षणकप्रेक्षकाः समागतास्तत्प्रारभ्यतां प्रासंगिकम्.

सूत्रधारः–यथाज्ञामात्यस्य. ( इत्युक्त्वा नेपथ्याभिमुखमवलोक्य ) प्रिये ! इतस्तावत्.

( प्रविश्य )

नटी–प्राणनाथ ! एषास्म्याज्ञापय माम् ।

सूत्रधारः–अभिनवनाटकालोकनलालसानेतान्लोकान संगीतेन रंजय.

नटी–यथाऽऽज्ञाऽऽर्यपुत्रस्य । ( इत्युक्त्वा गायति. )

जयतु जयतु सोयं बालगोपालचिंता-
मणिरनुदिनमिंद्रोपेंद्ररुद्रादिवंद्यः ।
स्मृतिपथमुपयातोपीह यश्चिंतितार्थान्
वितरती हि समस्तान् स्वाश्रितेभ्य क्षणार्द्धात् ॥

केशी–मंगलश्लोक एव निवेदयति गोपालबालभक्तिभरपरतां प्रेक्षणकस्य.

**कंसः**–भवतु । ततोपि किम् ?

**सूत्रधारः**–प्रिये! सम्यग्गीतं परं मुखमुद्रा ते कथमुदासिना लक्ष्यते ?

**नटी**–नाथ ! जानास्येव दुर्भिक्षप्रभावादप्राप्तभक्षणयोः पुत्रीपुत्रयोर्दीनदीनां मुखमुद्रां स्मारं स्मारं मनो मे परमौदास्यदास्यमुद्वहति.

सह्यैव वृश्चिकफणींद्रमृगेंद्रदंष्ट्रा-
जन्याखिलायुधनिपातभवातिपीडा ।
सह्यैव सा नरकगापि परंत्वसह्यं
दुःखं क्षुधार्तशिशुवक्त्रविलोकनोत्थम् ॥

(नेपथ्ये)–सूत्रधारकुटुंबिनि! साधूक्तं साधूक्तं 'परंत्वसह्यं, दुःखं क्षुधार्तशिशुवक्त्रविलोकनोत्थम्' ( इतिपठति ).

**सूत्रधारः**–प्रिये ! महीजिन्नाम्नो महीमहेलस्य महेलाया. शैब्याया इयमुक्तिः श्रूयते । तदेह्यनंतरकरणीयाय सज्जीभवावः ( इत्युक्त्वा निष्क्रांतौ ).

( ततः प्रविशति खिन्नया शैब्यया सहितो राजा महीजित्. )

**शैब्या**–प्राणनाथ !

सह्यैव वृश्चिकफणींद्रमृगेंद्रदंष्ट्रा
जन्याऽखिलायुधनिपातभवा च पीडा ।
सह्यैव सा नरकगापि परंत्वसह्यं

दुःखं क्षुधार्तशिशुवक्त्रविलोकनोत्थम् ॥

( इति वदंती नेत्राभ्यामश्रूणि मुंचति. )

**राजा**—प्रिये ! युक्तैवोक्तिस्ते । दैवायत्ते किं विधेयम् ?

**शैब्या**—नाथ ! सर्वं स्वायत्तमेव । किं दैवायत्तम् ? प्रथमं तावत्प्राप्तसाम्राज्यपदयोरप्यावयोरौरसपुत्रमुखदर्शनसुखविरहः किं दैवकृतः ? नैव । किंतु पूर्वकृतैरेवास्मत्कर्मभिः कृतः ।

**राजा**—प्रिये ! सत्यमेवेदं वचस्ते.

**शैब्या**—इदानीं पुत्रीकृत्य पालितौ लालितौ पोषितौ चेमौ जयसेनाजयसेनावन्ननिमित्तं साश्रुगतं कलहायेते एतदप्यस्मत्कृतानां पूर्वकर्मणां फलं न दैवस्य दोषः ।

**राजा**—( स्वगतं ) हा ! मया पुत्रीकृतयोरपि तयोरन्ननिमित्तं कलहो ? हंतेदानीं गताभ्युदयप्रत्याशा ( प्रकाशम् ) देवि ! स्वीकरोत्यंतःकरणं मे देव्या वचस्तथ्यताम्.

**शैब्या**—पुत्रौ जयसेनाजयसेनौ विनान्नं कलहायेते एतदस्मत्पूर्वकृत्यस्यैव परिणामः । प्रजा हि राज्ञां परमा संततिः सापि दुर्भिक्षभयपीडिता प्रणाशमुपयास्यति साऽप्यस्मत्कृतानामेव पूर्वकृतानां परिणतिः ।

**राजा**—एवं खलु । क्वेदानीं मे वत्सौ ? तावेव द्रष्टुमीहे.

( ततः प्रविशति जयसेना जयसेनश्च ).

**जयसेनः**–( सास्त्रं ) जयसेने ! त्वमेवेमां पूरिकां प्राश्य किंचित्क्षुधः शांतिं कुरु.

**राजा**–वत्स ! उचितमेतन्मत्पुत्रस्य ते.

**जयसेना**–भ्रातर्भ्रातर्नाहमेनामुपयोक्ष्यामि त्वमेव तां भुंक्ष्व। परमया क्षुधाक्रांतं मुखकमलं ते.

**राजा**–पुत्रि ! त्वयापिवचनेनानेन मत्पुत्रीत्वमलंकृतम्.

**जयसेनः**–जयसेने ! क्षुधितायां त्वयि कथमहमेनां भोक्ष्यामि? नैव भोक्ष्यामि.

**जयसेना**–भद्रमुख ! अहं खलु ज्येष्ठा स्वसा। कथं कनिष्ठे भ्रातरि क्षुधिते त्वय्यहमेनां खादितुमुत्सहे ? प्रयांतु नाम प्राणा नाहं भोक्ष्ये ( इति पूरिकां दूरतः क्षिपति ).

**जयसेनः**–प्रियस्वसर्जयसेने ! अन्नं हि देवता ततस्तस्या अनादरोपि दोषाय। तदेहि तां मात्रे समर्पयावः ( इति पूरिकामादाय मातृसमीपमुपेत्य ) मातर्मातर्नैनां पूरिकां जयसेना स्वादते विना मया। नाहं च तया विना स्वादे। तत उभाभ्यामनादृतायामस्यां मातृचरणैरादरः कर्तव्य इति प्रार्थना मे.

**राजा**–( स्वगतं ) उज्जीविताभ्युदयप्रत्याशेदानीं मे ( प्रकाशम् ) प्रिये ! अन्ननिमित्तं कलहोप्ययमनयोः प्रशंसनीयतमोऽलौकिकतमश्च। ईदृशः कलह एवायमेतयोर्मे भविष्यच्छ्रेयःश्रियं

निवेदयति.

**शैब्या**—प्राणनाथ ! यद्यप्ययं कलहो न लौकिकः किंत्वलौकिकस्तथापि यत्र राजकुमारयोरप्यन्ननिमित्तमीदृशी स्थितिस्तर्हि वराक्या अस्मत्प्रजायाः पुत्राणां पुत्रीणां चान्नार्थं स्थितिः कीदृशी भविष्यतीति चिंतनीयम्। तादृशस्थितौ च क उपालभपात्रमित्यपि विचार्यम् ( इतिवदंत्यश्रूणि मुंचति. )

**कंसः**—केशिन् ! केशिन् ! नियुतं गोधूमशालितंडुलमुद्गानां गोण्यो महाराजाय महीजिते प्रष्यंताम्.

**केशी**—( सांजलिबंधमुत्थाय ) महाराज प्रेक्षणकमेतत्.

**कंसः**—विस्मृतमेतन्मया.

**राजा**—प्रिये ! मदीयराष्ट्रस्यैतादृशदुर्दशास्थितौ मदीयः प्रधान एवोपालंभपात्रम्.

**पशुधन मधनं प्रोक्तं धनमर्धं धान्यमेव धनमखिलम् ।**
**अतिधनमेतत्रितयं विद्या भूः शोभनं मित्रम् ॥**

इतिप्राकृतनप्राज्ञजनप्रज्ञाप्रज्ञातं निर्णयमनादृत्य ताम्ररौप्यसुवर्णशकलमात्रधनबुद्धिनाल्पबुद्धिना येन प्रतिवर्षं समुत्पन्नानि धान्यानि विक्रीय विक्रीय निर्धान्यकणः कृतः सर्वोपि मे देशः । सांप्रतं तदीयलोभप्रभावात्सर्वेषां वदनेभ्यः पततं बाष्पतारां धारां सर्वत्र पश्यामो न केषामपि सदनेभ्यः पततीं

धान्यधारां पश्यामः। नैतावदेव क्षत्रियोप्यहं दुर्बुद्धिना तेन वृत्त्या वैश्यतां नीतः। क्षत्रियकुलशिरोमणेर्मे प्रजापरिपालनमेव परमोधर्मः। किं मे धान्यविक्रयजन्यधनचयसंचयेन प्रयोजनं? दुष्टस्य तस्य मेदसैवेदानीं पोषणीया मया प्रजा। (क्षणं विचार्य निःश्वस्य च सास्रं) देवि! किमन्योपालंभेन? निर्बुद्धिरहमेवोपालंभपात्रं नान्यः कश्चित्। येन मया प्रधानपदानर्होऽपि जनः प्रधानपदे स्थापितो निर्दयतमहृदयस्य तस्यैवानुमत्या प्रतिवर्षं नवनवान् करान् निःक्षिपता मया निर्धनधान्यवसनाशनाः कृता निजाः प्रजाः। पिशिताशनावतारेण तेन भक्षिता अपि धनलवलाभलोभांधलोचनो नाहमपश्यं निजाः प्रजा अजा इवातिकरुणकरुणं क्रंदमाना अपि। नैतावदेव गोचरस्थलानि गोनिवेशस्थलानि गोपेयपयःस्थलान्यपि धनलोभात्तेन दुष्टेन कर्षितान्यपि बुद्धिमांद्यान्ममैवैतदपथ्यामितिनावागमम्. अलमिदानीमेतदतीतविषयस्मरणानुतापेन प्रबुद्धोहमिदानीं सर्वं समंजसमेव करिष्ये। कः कोस्ति भोः (इत्युक्ते).

द्वारपालः–( प्रविश्य ) आज्ञापयतु देवः।

राजा–गच्छ शीघ्रमतिवृद्धमर्थनिधिनामानंकुलक्रमागतममात्यमिहानय.

**द्वारपालः**—यथाज्ञा देवस्य (इत्युक्त्वा निष्क्रम्य क्षणात्पुनःप्रविश्य) देव! एषोऽमात्यः।

**अर्थनिधिः**—(प्रविश्य) जयतु जयतु देवः (इतिवदन् प्रणमति).

**राजा**—आर्य अर्थनिधे! इहास्यताम् (इत्यासनमर्पयति).

**अर्थनिधिः**—महाराज! अलमलमत्युपचारेण किंकरपरमाणौ। यदाज्ञापनीयं तदाज्ञाप्यताम्.

**राजा**—आर्य! दुष्टस्यानर्थनिधेः संगदोषेण निर्धनधान्यकणः कृतो मया मदीयो निखिलो देशः। पुत्रनिर्विशेषा मे प्रजा विना धान्यैः प्राणांतकंठा वर्तते। तदमी मे कोशा अमी चालंकाराः किं बहुना सर्वस्वमपि समर्पयामि युष्मभ्यं तत्सर्वमपि समर्पयित्वा द्वीपांतरेभ्यो दिगंतरेभ्योपि धान्यान्येव सत्वरतरं कयापि युक्त्या संपाद्य यावन्मदागमनं पुत्रनिर्विशेषं प्रजाः पोषणीया अनर्थनिधिश्च पापपापः काराग्रहकुंटुंबी विधेयो यद्बुद्धिपरिणतिरियं दुर्दशा मे देशस्य.

**अर्थनिधिः**—महाराजेन क्व गम्यते?

**राजा**—अहं खल्वनया प्रियया सह गंतुमिच्छामि भगवतः श्रीयमदेवस्य संयमिनीं नाम नगरीम्.

**अर्थनिधिः**—किमर्थमस्मिन् विषमतमसमये तत्र गंतव्यम्? विना महाराजेन निःशृंखलः खलु भविता सकलोपि लोकः। तत्सत्यां

दुष्कालशांतौ गंतव्यमिति मेऽभ्यर्थना.

राजा—कुलपरंपराप्राप्तामात्यपदेषु मे तातचरणनिर्विशेषेषु युष्मासु लोकव्यवस्थावलोकपरेषु नैषा शंकापि भवति। अस्ति किञ्चिदिदानीमेव लोकसाक्षितनयाद्देवान्मे ज्ञातव्यं ततो गमिष्यामि.

अर्थनिधिः—सुखं गम्यतां महाराजेन। महाराजप्रताप एवात्र तिष्ठति प्रजापालनाय। निमित्तमात्रमयं जनस्तथापि न काचिच्चिंता चेतसि तद्विषयिणी विधेया महाराजेन.

राजा—निश्चितमेव चेतस्तद्विषये मे.

अर्थनिधिः—अनर्थनिधिः किमर्थं कारागारे निक्षेपणीयः ?

राजा—आर्य! दुर्बुद्धिना तेन सकलोपि देशो मे रंकरंकदशां नीतस्तस्य कारागारावासोऽत्यल्पैव शिक्षा। प्राणांतशिक्षामेवार्हति पापोयम्। ततः प्राणांतदंड एव देयस्तस्मै.

अर्थनिधिः—(सांजलिबंधं) महाराज! क्षम्यतां क्षम्यताम्। भृत्यकृत एकोपराधो भर्त्रा सोढव्य इति धर्मो वः।

राजा—आर्य! नास्यास्त्येकोऽपराधः किन्त्वनेके.

अर्थनिधिः—सत्स्वप्यनेकेष्वप्यपराधेषु नायं देवेन हंतव्यो यतः सकललोकनिंद्येन स्वेन कर्मणैवायं हतः किमतः परं हंतव्यः?

राजा—आर्य! यद्येवमार्यस्यैवाग्रहस्तर्हि न तस्मै प्राणांतो दंडो

योजनीयः परं कारागारावासी तु यावन्मदागमनं विधेय एव.

अर्थनिधिः—महाराज! महाराजेन पूर्वं प्रधानपदे स्थापितस्य तस्य नैतदपि कर्तुं समुचितं ततो यावन्महाराजागमनं निर्व्यापारः स्वगृह एव यथा स्थास्यति तथा करिष्यामि। न ततोधिकं कर्तुं मे मनः प्रभवति.

राजा—( स्वगतं ) अहो सज्जनानामजातशत्रुता काप्यद्भुतैव ययायं स्वकीये परमवैरिण्यपि न वैरिबुद्धिं बध्नाति। नैतावदेव मयाज्ञप्तोपि न तस्यात्याहितं कर्तुं प्रवर्तते (प्रकाशं) आर्याः! यथायुष्मदिच्छं युष्माभिस्तद्विषये कर्तव्यम्.

अर्थनिधिः—महाराजेन महानयमनुग्रहः कृतः

राजा—आर्याः ! प्रजाविषये ( इत्यर्द्धमुक्त्वा साश्रुलोचनो विरमति ).

अर्थनिधिः—महाराज! एषा प्रजा मे बहिश्चराः प्राणाः। प्राणार्पणैरपि तां सदामंदानंदानुभववतीं कर्त्तुं यतिष्य इति निःसंशयलेशमवगंतव्यं देवेन.

राजा—आर्याः! अनेन वो वचनेन प्रणष्टा मे सर्वापि प्रजाविषयिणी चिंता तद्यं प्रयाणप्रणामः ( इत्युक्त्वा सह देव्याऽऽकाशमार्गेण निष्क्रांतः ).

अर्थनिधिः—जयतु जयतु महाराजः ( इति वदन् निष्क्रांतः प्रधानोर्थनिधिः ).

( ततः प्रविशति चित्रगुप्तेनानुगतो धर्मराजः )

यमः—( सिंहासनमधिरुह्य ) सखे चित्रगुप्त ! काति संत्यद्य पापिनः?

चित्रगुप्तः—देव ! संति दश महापापिन एव देवेन दंडनीयाः ।

यमः—तर्हि क्रमत आहूयंतामत्र.

चित्रगुप्तः—यथाज्ञा देवस्य ( इत्युक्त्वा ) वक्रतुंड ! समानीयतां पापी.

वक्रतुंडः—यथाज्ञा देवस्य ( इत्युक्त्वा निष्क्रम्य पुनः पापिना सह प्रविशति. )

यमः—( पापिनं विलोक्य ) चित्रगुप्त ! विलोक्यतां किमस्य पातकम् ?

कंसः—केशिन् ! किमत्र दर्शनीयं केवलं मनउद्वेगकरमेव सर्वं दृश्यते.

केशी—यथाऽऽह महाराजस्तथापि पित्राज्ञानुरोधान्नावत्परिसमाप्ति विलोकनीयमेव.

कंसः—नेति केनोच्यते ? विलोक्यते.

चित्रगुप्तः—( क्षणं पत्राणि विलोक्य ) भगवन् ! कृषीवलः पूर्वमयमासीत्.

यमः–ततस्ततः ?

द्वारपालः–( प्रविश्य ) भगवन् ! सपत्नीको महीजिन्नामा राजा द्वारि तिष्ठन् देवदर्शनाय स्पृहयति । ततः परं देवाज्ञैव प्रमाणम्.

यमः–( साश्चर्यं ) किं महीजिन्महाराजो द्वारि तिष्ठति ? चित्रगुप्त ! शीघ्रतरमेव सपत्नीकं तं समानयात्र.

चित्रगुप्तः–यथाज्ञा देवस्य (इत्युक्त्वा बहिर्निष्क्रम्य नृपेण सह प्रविशति. )

राजा–जयतु जयतु देवः श्रीधर्मराजः ( इति वदन् प्रणमति. ).

यमः–महीमहेंद्र ! पूर्णाभिलाषो भूयाः ।

शैब्या–नमःश्रीकर्मसाक्षिपुत्ररत्नाय (इति वदंती प्रणमति. )

यमः–वत्से ! पवित्रपातिव्रत्यप्रभावात्प्राप्ताभ्युदया भूयाः । चित्रगुप्त ! पवित्रचरित्राभ्यामाभ्यां दपंतीभ्यामासनं समर्प्यताम्.

चित्रगुप्तः–यथाज्ञा देवस्य ( इत्युक्त्वा सौवर्णसिंहासनं ताभ्यामर्पयति. )

( राजा सपत्नीको यमराजाज्ञया सिंहासनमधितिष्ठति ).

यमः–महाराज ! प्रजापालनरूपं स्वधर्मकर्म परित्यज्य किमर्थमत्रागमनं कृतं महाराजेनेति ज्ञातुमीहे.

राजा–( सांजलिः सिंहासनादवतीर्य ) कर्मसाक्षिसूनो ! नास्ति

म औरसी संततिः किं चौरसनिर्विशेषा प्रजापि मे सांप्रतं दुष्कालद्वादश्या परिपीड्यते। कस्य कीदृशस्य च मे पूर्वजन्मकृतस्य दुष्कृतस्य फलमिदमिति प्रष्टुं केन सुकर्मणा चौरससंततिमुखदर्शनसुखप्राप्तिः सुभिक्षसुखामृतमहोदधिनिमग्नता च भवेदिति च प्रष्टुं श्रीमतां चरणमूलमुपागतोऽस्मि ( इति वदन् दंडवत्प्रणमति. )

कंसः–केशिन् ! महीजित्प्रश्नोत्तरेण वयमप्यौरससंततिप्राप्तिसाधनं श्रोष्यामः पितृचरणैरेतदर्थमेवाहमेतद्दीक्षितुमाज्ञप्तोऽस्मीति मन्येऽहम्.

केशी–(स्वगतं) हा! रूपकनिरूपणेनायं धर्मप्रीतिर्भविष्यति। सति च तथा हता एवाधर्मपक्षपातिनो वयं (प्रकाशं) महाराज ! ममाप्येवं प्रतिभाति.

यमः–राजन्! युष्मत्प्रश्नोत्तरं प्रसंगपतितैतत्कर्मसमाप्त्यनंतरं करिष्यामि। सांप्रतं स्वस्थतया सिंहासनमलंकुरु.

राजा–यथाज्ञा देवदेवस्य ( इत्युक्त्वा तथा करोति. )

यमः–चित्रगुप्त ! प्रोच्यतामस्य कृत्यम्.

चित्रगुप्तः–कृषीवलेनामुना कृषिकर्मक्षमक्षमालाभलोभेन गोचरस्थलानि गोपेयपयःसरांसि गोविश्रामस्थलानि च यावज्जीवं कृष्टानि.

**यमः**–( सक्रोधं ) दुष्ट दुष्ट ! गोचरस्थलमेव त्वया कर्षणीयमवलोकितं नान्यत् ? पापतमेन तेनात्मकर्मणा निरययातनानियुतान्यनुभव वर्षनियुतपर्यंतम् । गच्छ, मा दर्शय मुखं ते मह्यम्.

**पापी**–( सकंपः साश्रुवदनो रुदन् वक्रतुंडेन ताडितो निष्क्रांतः )

( ततः प्रविशति द्वितीयः पापी. )

**यमः**–चित्रगुप्त ! निवेद्यतां कृत्यान्यस्य.

**चित्रगुप्तः**–( पत्राणिविलोक्य ) भगवन्नयं मरुमंडलाधिपतेः प्रधानोऽभूत् । वैश्यवंशजन्मनाप्यमुना स्वोदरभरणपरायणांतःकरणेन बलाद्गोचराण्येवापहृत्यापहृत्य कृषीवलेभ्यः कृष्टुं समर्पितानि तदुत्पन्नधनैरायवृद्धिं प्रदर्श्य राजप्रियता संपादिता.

**यमः**–( सक्रोधं ) धिग्रे कर्मचांडाल ! कुलपरंपराधर्मं परित्यज्य स्वोदरपूरणाय गोचराण्येवापहृतानि स्वभर्तुरप्यश्रेय एवाचरितम् ? याहि यावच्चंद्रदिवाकरं दुःसहतमाः क्रमात्सर्वा एव निरययातना भुंक्ष्व.

**पापी**–( यमकिंकरैः कषाभिस्ताड्यमान आक्रंदमानो निष्क्रांतः )

( ततः प्रविशति तृतीयः पापी. )

**यमः**–चित्रगुप्त ! त्वरयोच्यताम्.

चित्रगुप्तः—देव! गुर्जरनिवासिनानेन स्वक्षेत्रे पतंत्या धेनोर्दृष्टौ वज्रिक्षीरं निक्षिप्य बलादंधीकृता धेनुः ।

यमः—(सक्रोधम्)

धिग् धिग् रे कर्मचांडाल मा ते दर्शय मे मुखम् ।
वक्रतुंडास्य नयने स्फोटय प्रतिवासरम् ॥

केशी—(कंसंप्रति) महाराज! दृष्ट इदानीं युष्मत्पितृचरणानामाशयः? एतन्नाटकदर्शनेन गोभक्तिमंतं भवंतं कर्तुमिच्छंति ते.

कंसः—केशिन्! मा सचिंतो भव। तादृशनाटकशतदर्शनमपि न मां गोभक्तिमंतं कर्तुं शक्तम्.

राजा—प्रिये! अस्मत्प्रधानेनानर्थनिधिनाप्येता एव यातनाः सर्वा भोक्तव्याः । यतस्तेनापि यावज्जीवमीदृशान्येव कृत्यानि कृतानि.

राज्ञी—तद्गति प्रियं मे। परं तत्संसर्गदोष आर्यपुत्रमपि स्प्रक्ष्यतीति वेपते मे हृदयम्.

राजा—प्रिये! माभैषीः। नीचनीचतमैतत्संसर्गदोषनिवारणक्षमप्रायश्चित्तं धर्मराजादेवाववुध्य करिष्यामि.

(ततः प्रविशति चतुर्थः पापी.)

यमः—(सरोषं विलोक्य) चित्रगुप्त! कीदृक्कर्मायं पापीत्युच्यताम्.

चित्रगुप्तः—देव! अवंतीषु ब्राह्मणोयमुपस्करलाभलोभाद्गाः प्रतिगृह्य न तास्तृणैरपि संभावयामास ततस्ताः क्षुधातृषाशीतातपवातवर्षाभिश्च यावज्जीवं दुःखान्येवान्वभवन्.

यमः—( सरोषावेशं ) धिग्रे पठितमूर्ख! गोमहिमानं पश्यन्नप्यंधो जातः? स्वकर्मफलं भुंक्ष्वेदानीम्। वज्रतुंड! क्षुधातृषाशीतातपवातवर्षाभिश्चायं यावज्जीवमनुभवत्वसह्यानि दुःखानि.

पापी—हा! तात! हा मातः! ( इत्युच्चै रुदन् निष्क्रांतः )

( ततः प्रविशति पंचमः पापी. )

यमः—चित्रगुप्त! कथ्यतामेतस्य पापम्.

चित्रगुप्तः—देव! मातापित्रोः स्वप्नेप्यनेन नाज्ञा पालिता। प्रत्युत प्रतिदिनं तयोरंतःकरणं नानाविधक्लेशैः संतापितम्.

यमः—( दंतैरोष्ठौ संपीड्य ) नीच कृतघ्नशिरोमणे! स्वकर्मणानेन रौरवमहारौरववेदना अनुभव.

पापी—हा! दुःसंगत्या न कृता मया पित्रोः परिचर्या. ( इति रुदान्निर्गतः )

केशी—महाराज! मत्संगत्या न त्वं पित्रोराज्ञां पालयसीति दर्शयितुं पितृचरणैरेतत्प्रेक्षणकप्रेक्षणायाज्ञप्तो महाराज इति मन्येऽहम्.

कंसः—कपोलकल्पनेयं ते न मे रोचते.

यमः—प्रवेश्यतामन्यः पापी.

(ततः प्रविशति प्रथमा पापिनी.)

यमः—चित्रगुप्त! पापाया अस्या उच्यतां कृत्यानि.

चित्रगुप्तः—(पत्राणि विलोक्य) महाराज! नानया कदाचिदपि श्वश्रूश्वशुरयोः सपर्या स्वप्नेपि निर्मिता। न सत्यवचनं स्वप्नेप्युक्तं। नात्मप्राणनाथपादपद्मपरिचर्यापि स्वप्नेपि कृता। केवलं निष्कारणलवैः क्लेशशतैः संतापितानि संततं तेषां स्वांतानि कुटिलकटुतमासत्यवचनविषविषमज्वालामालाभिः।

यमः—पापे! पापे! दुराचारे! स्वैः कुत्सैस्तैरमंगलैः।
रौरवे नरके तिष्ठेर्यावच्चंद्रदिवाकरम् ॥

पापिनी—हा दुष्टानामसतीनां संगत्या मयेदं कृतं परं दुःखं तु मयैव भोक्तव्यम्. (इति वदंती निष्क्रामति.)

केशी—देव! पितृचरणानां न केवलं मय्येव रोषः किंतु महाराजमहिष्योरस्तिप्राप्त्योरुपर्यप्यस्ति रोष इति पापिनीप्रवेश एवायं निवेदयति.

कंसः—केशिन्नलं कुतर्कैः। मन्ये एव मन्ये ते भ्रांतिपिशाचावेशविवशं सर्वं विपरीतमेव पश्यति.

केशी—(स्वगतं) रुष्ट इदानीं महाराजस्ततः प्रतिक्षणं नैवं वक्तव्यम् (प्रकाशं) युक्तैवोक्तिर्महाराजस्य.

(ततः प्रविशति द्वितीया पापिनी.)

यमः—चित्रगुप्त ! निवेदयास्याः कृत्यानि.

चित्रगुप्तः—देव ! जन्मतः प्रभृत्यनृतभाषणपरयानया कटुकटुभिर्वचनविषकवलैर्व्याकुलीकृतानि सतां कुलानि पतिवंचनं स्वकुलवंचनं चाऽविरतं रचितम्.

यमः—(सक्रोधम्)

पापे ! पापैरीदृशैस्ते वास आचंद्रभास्करम् ।
कुंभीपाकेऽत्र भविता मा मे दर्शय ते मुखम् ॥

पापिनी—हा ! बाल्यादेव नीचनीचकुलटाकुलसंगतिविषलतिकायाः परिचयस्यायं परिणामः (इतिवदंती रुदंती निष्क्रांता).

शैब्या—प्राणनाथ ! संतुष्टं मे स्वांतं दुष्टाया अस्या उचितदंडप्रदानप्रदर्शनेन.

राजा—देवि ! उचितदंडप्रद एव भगवान् दंडधर इति लोकप्रसिद्धिः ।

(ततः प्रविशति तृतीया पापिनी).

यमः—चित्रगुप्त ! निवेदयास्याः कृत्यम्.

चित्रगुप्तः—(पत्राणि विलोक्य) भगवन् ! क्षेत्रपालिकयानया क्षेत्रपतिता बह्व्यो गावस्ताडिता निर्दयतरया रयाद्धावंत्यो दंडप्रहारैः पाषाणप्रहारैश्च.

यमः—निर्दये निर्दयैः कृत्यैस्त्वदीयैस्त्वं निरंतरम् ।
निर्दयैस्ताडिता पीडामनुभूयाः शतं समाः ॥

पापिनी—हा ! अज्ञानात्कृतमपि दुष्कृतमसह्यतमदुःखप्रदं भवतीतीदानीमेव ज्ञातं मया। किमिदानीं कर्तव्यं मया ( इति विलपंती निष्क्रांता ).

( ततः प्रविशति चतुर्थी पापिनी ).

यमः—प्रधान ! प्रोच्यतां.

चित्रगुप्तः—देव ! हुंकारतुंकारप्रकरैर्दुर्वचोभिरेतया श्वशुरयोर्ननंदृणां पत्युश्च स्वांतं संतापितम्.

यमः—पापे ! पापेऽतिपापेन तेन भुक्त्वात्र यातनाः ।
पंचानुभूया जन्मानि शुनीनां निर्जने वने ॥

पापिनी—हा ! हतास्मि मंदभाग्या कथमेतद्भोक्तुं शक्यम् ( इति वदंती रुदंती च निष्क्रांता ).

( ततः प्रविशति पंचमी पापिनी ).

यमः—प्रधान प्रधान ! प्रोच्यतां त्वरया कृत्यान्यस्याः ।

चित्रगुप्तः—देव देव ! प्रतिनिमेषोन्मेषं चानया नयानभिज्ञया स्वपतिवंचनपूर्वकं परपुरुषेष्वेव संचारिताः पापा दृष्टयः ।

यमः—दुष्टे ! दुष्टेन कृत्येन तेन तेऽनुदिनोदयं ।
दृष्टिमुत्पाटयिष्यंति वज्रतुंडास्तु वायसाः ॥

गच्छ मा दर्शय ते मुखं मे.

पापिनी–हा! हंत किं करोमि क्व गच्छामि न तदानीमीदृक्परिणामं परपुरुषेषु पापदृष्टिप्रेषणमस्तीत्युपदिष्टं केनापि (इत्याक्रोशंती निष्क्रांता).

यमः–प्रधान! वर्तत इदानीं कोऽप्यवशिष्टः पापः पापा वा?

चित्रगुप्तः–देव! नास्ति। परिसमाप्तमेतत्कृत्यं.

यमः–( महीजितं विलोक्य ) राजन्! त्वदीयेनाऽप्रतिमेन प्रजापालनप्रेम्णा परितुष्टस्वांतस्तुभ्यमदर्शनीयमपि दर्शयिष्यामि.

महीजित्–महाननुग्रहः।

यमः–चित्रगुप्त! तच्चित्रमत्रानय यन्मयाऽद्यदिनाच्छतवर्षेभ्यः पूर्वं ज्येष्ठशुक्लाष्टमीमध्याह्ने समालिखितम्.

चित्रगुप्तः–यथाज्ञा देवस्य ( इत्युक्त्वा निष्क्रम्य पुनः प्रविश्य ) देव! सोयं चित्रपट ( इत्युक्त्वा धर्महस्ते समर्पयति ).

यमः–(चित्रपटं प्रसार्य) वत्से! शैब्ये! वत्स! महिजिद्दीयतामत्र दृष्टिः। किं तत्र दृश्यते?

शैब्यामहीजितौ–यथाज्ञा देवस्य (इत्युक्त्वा सादरं विलोकयतः)

कंसः–( चित्रपटं विलोक्य ) अहो केशिन्! निर्जनमरण्यमिव दृश्यते निरानंदकरम्.

केशी–महाराज! प्रारंभादेव किमिवानंदकरं दर्शितमाभिः?

शैब्या–प्राणनाथ ! महाराजस्य चित्रकलाकौशल्यं किमप्यद्भुतमिव प्रतिभाति । दीयतामितोदृष्टिः ।

भीष्मग्रीष्मप्रचंडांशुप्रतप्तमभितो वनं ।
निश्छायमधिकम्लानदलपल्लवसत्फलम् ॥

राजा–प्रिये ! एवमेतद्दीयतामितोपि दृष्टिः । इयं खलु वनसरिन्निःसलिललेशा चंडकरखरतरकरप्रपातचंचच्छिलाकणतयांगारकणगणांचितेवोभयतटाऽतिनीरसतृणगणतया प्राप्तजरापलितेव प्रेक्ष्यते.

शैब्या–नाथ ! मृगमरीचिकाभ्रांतमनसो दूराद्यापततस्तृषाशुष्ककंठोष्ठतालुरसनान् पथिकान् निवारयंत इवामी जलपक्षिणः पक्षपरिभ्रमणसंज्ञया दीनदीनमुखाः परितो डयंते.

राजा–प्रिये ! ईदृशस्थले तु दुष्कालशत्याऽप्यशोषणीयसलिलं महासरः कारयितव्यम्.

शैब्या–अनर्थनिधौ जीवति प्रधाने दुष्करमेतत्.

राजा–मृतप्राय इदानीं स मंतव्यः ।

शैब्या–जीवतु वा स स्वयं तस्य तु दुर्बुद्धिरेव म्रियताम्.

राजा–( निपुणं निर्वर्ण्य ) प्रिये ! प्रिये ! पश्य पश्य । सद्यः प्रसूतामेनां धेनुं सवत्सां विदारकांतर्गतं पुरुषमात्रपेयं पयः पातुं प्रवृत्तां निवार्य कोप्ययं पापः स्वयं पिबति.

शैब्या–प्राणनाथ ! युक्तमुक्तम् दीनेयं तृषार्ता बाष्पकुलाकुलाक्षी व लक्ष्यते। किंजातीयेनामुना पापेन भाव्यम् ?

राजा–वस्त्रैराकृत्या च वैश्याधम इव कश्चिल्लक्ष्यते.

शैब्या–अथ किम् । अनर्थनिधेः सजातीयेन केनचिद्भाव्यम् । को वान्यस्तादृशं पापं कुर्यात् ?

राजा–( स्मृतिमिवाभिनीय ) प्रिये न जानामि केन कारणेनेदं मन्मनसि परमौदास्यमुत्पद्यते.

वेपते हृदयमश्रुकलाभिः पूर्यते नयनयुग्ममजस्रम् ।
तापमेति च सुदुःसहमात्मा वीक्ष्य चित्रमिदमद्य मदीयः॥

(इति वदन् मूर्छया पतति.)

कंसः–अतिकरुणावान् खल्वयं राजा.

केशी–अतिकातरतरस्वांत एवायमिति वक्तव्यम्.

शैब्या–प्राणनाथ ! प्राणनाथ ! समाश्वसिहि समाश्वसिहि चित्रमेतत्. (इति वदंती चैलांचलेन वीजयति. )

राजा–( संज्ञामुपलभ्य )

अलमलमलमेतच्चित्रचित्रावलोकै-
र्नयमय ! नय नेदं वीक्षितुं वास्मि शक्तः ।
किमपि किमपि चित्ते दुःखमुत्पद्यते मे
विरत इह ततोस्मात् तत्क्षमस्वापराधम्. ॥

यमः—राजन्नातःपरं किमपि विलोकनीयं किं तु श्रोतव्यमेव.

राजा—अवहितोस्मि श्रोतुम्.

यमः—राजन्! येन वणिजा सा पिबंती गौस्तृषार्ता स्वप्राणपरिरक्षणाय निवारिता स एव केनापि पुण्यकर्मणा महीमहेंद्रतां गतोसि असह्यतममनपत्यताद्दुःखं यदनुभवसि स्वौरसापत्यप्रतिमाश्च ते प्रजाश्च प्रतिवर्षं यद् दुर्भिक्षेण पीड्यंते तत्सर्वं तवैव पूर्वजनुःकर्मणः फलम्.

राजा—भगवन्! कतमेन कर्मणा तद्दोषमार्जनं भवेत्तदुच्यताम्.

यमः—राजन्! प्रतिपुरपत्तनपुटभेदनग्रामखेटखर्वटघोषं रच्यंतां विशाला गोशालाः। रक्ष्यंतां गोचरक्षेत्राणि। बध्यंतां सर्वत्रानुक्रोशपरिसरं विलसच्छायातरुमालिकाः पानीयशालिकाः। प्रतिदिनं दीयंतां गोधनेभ्यः पायसापूपमोदकमुद्गादीनि नैवेद्यानि। समर्च्यंतां च परमदेवता इव प्रतिप्रभातं गंधाक्षतपुष्पैः परममंगलवर्षिण्यो गावः। किं च दूरेस्तु गोताडनवार्त्ता परं गास्त्रासयितुं दंडमपि य उद्यच्छेत्तमपि करच्छेददंडेन योजयिष्याम इति सर्वत्र घोष्यंताम्। ततोऽस्मिन्नेव वर्षे सत्पुत्रमुखदर्शनसुखमनुभविष्यसि न च कदाचित्तव देशे दुर्भिक्षभीतिर्भविष्यतीति निःशंकमवेहि.

राजा—भगवन्! गृहीतमनुशासनं शिरसा। अद्यैव स्वपुरं गत्वा

तत्सर्वमहं करिष्ये. ( इत्युक्त्वा प्रणमति. )

शैब्या—भगवन्! परमोनुग्रहः ( इति प्रणमति. )

यमः—वत्सौ! साधयतं स्वराजधानीम्.

राजा—यथाज्ञाधर्मराजस्य. ( इत्युक्त्वा सह राज्ञ्या निष्क्रांतः )

केशी—महाराज! दृष्टम्? किंकरस्य तर्कः सत्योऽसत्यो वा?

कंसः—दृष्टं सर्वं शेषमपि दृष्ट्वा यथार्हं करिष्यामः।

यमः—चित्रगुप्त! समानय विमानम्.

चित्रगुप्तः—यथाज्ञा देवस्य ( इति निष्क्रम्य पुनः प्रविश्य ) देव! सज्जं विमानम्.

यमः—( विमानमारुह्य ) विमानवर! श्रीमथुरापुरीपरिसरे श्रीयमुनातीरमुपसर त्वरया.

कंसः—केशिन्! किमिदं यमो मथुरामागच्छति किम्?

केशी—रूपकमेतन्न सत्या मथुरा ( धर्मराजश्चित्रगुप्तेन सह विमानमारुह्य निष्क्रांतः )

कंसः—केशिन्! पश्य नाटकशालायामेवेयं श्रीयमुना सवनोपवना दर्शिता नाटककलाकुशलाभिराभिः।

केशी—देव! युक्तमुक्तं देवेन दृश्यते ते ते रम्याः सर्वे यमुनाप्रदेशाः।

( ततः प्रविशंति धीवराः )

वृद्धः—वत्साः ! समाकर्षत समाकर्षत जालम्.

(सर्वे आकर्षंति । क्षणं विश्रम्य) अद्य खलु कश्चिन्महामकरो निपतितो बहवो वा मत्स्या निपतितास्तेन बलादाकृष्टमपि जालं न निःसरति.

वृद्धः—वत्साः ! संभूय बलं कुरुत (सर्वे तथा कुर्वंति).

कंसः—केशिन् ! धीवराः खलु मत्स्यान् गृहीतुमागता इव दृश्यंते नेदमपि किंचिद्रम्यम्.

केशी—देव ! प्रारंभादद्यावधि किमाभिर्नाटके रम्यं दर्शितम्?

(ततः प्रविशति जाले मत्स्यैः सह पतितो मुनिश्च्यवनः समाधिस्थः).

सर्वे—(सकौतुकं विलोक्य) भो भो मनुष्याकृतिर्मत्स्योयमभुक्तपूर्वोऽद्य लब्धः प्रहर्षस्थानमिदम् (इतिनृत्यंतः सतालं कोलाहलं कुर्वंति.)

मुनिः—(अतिकोलाहलात्समाधेरुत्थाय सरोषम्.) पापाः! किं कोलाहलं कुरुत ? किमेतत् ?

वृद्धः—(समीपमागत्य निर्वर्ण्य च) दुष्टास्तूष्णीं तिष्ठत तिष्ठत नायं मानवाकृतिर्मत्स्यः किं तु कश्चित्तपस्वी दृश्यते (सर्वे सभयं तूष्णीं तिष्ठंति).

कंसः—केशिन् ! कुतो जाले मुनेरागमनम् ?

केशी—देव ! श्रुतं मया पुराणे च्यवनः पूर्वं यमुनाजले षष्ठि वर्षसहस्राणि तपश्चचारेति। कायस्तेनैवामुना भाव्यमिति मे तर्कः।

मुनिः—दुष्टाः ! किमर्थममी मत्स्या गृहीताः।

वृद्धः—( सकंपम् ) भगवन् ! मत्स्यमारिणः खलु वयं धीवरा अस्माकमेते जीविका। भगवान् पुनरज्ञानतो जालपतितो गृहीतस्तत्क्षंतव्यम्। गच्छतु च भगवान् यथेष्टम्.

मुनिः—पुनर्मत्स्यानाममीषां का दशा भविष्यति ?

वृद्धः—भगवन् ! तान् विक्रीय कुटुंबपोषणं करिष्यामः।

मुनिः—तर्हि ममापि विक्रयो विधीयताम्। न खल्वहं सहचरानेतान् विहाय क्वापि गमिष्यामि.

वृद्धः—मुनिवर्य ! कस्त्वां गृह्णीयात् ?

मुनिः—अत्रत्यो राजैव मां गृहीष्यति परं प्रथममेतान् विमुच्य मद्वचसा राजा वक्तव्यो यमुनाजलान्निःसृतश्च्यवनस्त्वामाह्वयतीति.

वृद्धः—यथाज्ञा भगवतः ( इत्युक्त्वा मत्स्यान् जले विमुच्य निष्क्रांतः। ).

( ततः प्रविशति धीवरेणानुगम्यमानो राजा नहुषस्तत्पुरोहितो गविजातश्च. )

नहुषः—भगवन्नभिवादयामि मथुराधीशोऽहम्.

मुनिः—राजन् ! दीर्घायुर्भव.

नहुषः—काऽऽज्ञा भगवतः ?

मुनिः—मन्मूल्यमर्पयित्वाऽस्मै मां गृहाण.

नहुषः—यथाज्ञा मुनिराजस्य। धीवर ! ब्रूहि किं मुनिमूल्यमर्पया-मीति ?

मुनिः—मम मूल्यं तु त्वयैव वक्तव्यम् । न धीवरेण.

नहुषः—भगवन् ! तथा करिष्यामि । ग्रामदशकं दास्यामि.

मुनिः—नहि नहि ममायं निष्क्रयः ।

नहुषः—तर्हि ग्रामशतं दास्यामि.

मुनिः—नैतदपि मे योग्यं मूल्यम्.

गविजातः—(स्वगतम्) मुनिसदृशं यदस्ति तदहं वेद्मि परं 'नापृष्टःकस्यचिद्ब्रूयादिति' नीतिः । तन्मौनमेव वरम्.

नहुषः—तर्हि सहस्रं ग्रामान् दास्यामि.

मुनिः—राजन् ! नात्मप्रशंसां कर्तुमिच्छामि परं मद्योग्यं किमपि दीयताम्.

नहुषः—भगवन् ! समग्रं राज्यमपि युष्मदर्थं निषादेभ्यो दास्यामि.

मुनिः—राजन् ! समग्रमपि राज्यं नाहमर्हामि । मंत्रिभिः सह वि-

चार्यं किमपि मत्सदृशं दीयताम्.

कंसः—निर्दयः खल्वयं मुनिः । समर्पितसर्वस्वो राजा किमतःपरं कुर्यात् ?

केशी—देव ! तादृशक्रूरस्वभावा एव ब्राह्मणाः । तत एव देवेन ब्राह्मणोन्मूलनायाज्ञप्ता दैत्या इति युक्तमेव कृतम्.

कंसः—तादृशमंत्रिसंपत्परिणामोयम्.

नहुषः—( अपवार्य पुरोहितं प्रति ) भगवन् ! गविजात ! किमतः परं दातव्यम् । संक्रुद्धोयं मुनिस्त्रैलोक्यमपि दग्धुं शक्तः स मां दह्यादित्यत्र किं वक्तव्यम् ? ततोऽस्मात्त्रायस्व मां संकटात् ( इति वदन् प्रणमति. )

गविजातः—राजन् ! माभैषीस्तोषयिष्याम्यहं तं मुनिप्रवरम् । अनर्घ्याः खलु जगत्पूज्या ब्राह्मणास्तेषां नास्ति किमपि मूल्यम् ( कर्णे ) एवमेतम्.

नहुषः—( सहर्षमागत्य प्रणम्य च ).

उत्तिष्ठ विप्रर्षिशिरोमणे ! त्वं क्रीतोसि मूल्येन मयैकधेन्वा ।
एतत्तु मूल्यं परमं त्वदीयं मन्ये हृदा ब्रह्मविदां वरिष्ठ ॥

( इत्युक्त्वा प्रणमति. )

मुनिः—

उत्तिष्ठाम्येत्र राजेंद्र समं क्रीतोस्मि तेऽनघ ।

गोभिस्तुल्यं न पश्यामि पवित्रं परमं भुवि ॥

किराताः—(सखेदं) हा हताः स्मः। एतेन ब्राह्मणेन ग्रामदश-कादारभ्य समग्रं राज्यमपि न गृहीतं गृहीता च केवलमिदानीमेका गौः। हा! दुःखद एवायं दिवसो न एतस्य मुनेः प्रसंगात् (इति वदंतोरुदंति.)

कंसः—कुतस्तादृशं भाग्यं किरातानां स्याद्येन राज्यं मुनिः स्वमूल्यत्वेन स्वीकुर्यात्.

केशी—यथाह देवः। किराता एतन्मात्रमेवार्हंति.

मुनिः—महाराज! नहुष! जानासि खलु गवां माहात्म्यमिति संतुष्टं स्वांतम्.

स्वयंभुवा सर्वमंगलदुघा गावः सृष्टा एतासां दर्शनं स्पर्शनं पूजनं च पराः श्रेयःपरंपराः सृजति। किं च ये गवां शीत-वातातपत्राणं कुर्वंति तेपि सर्वदुःखविनिर्मुक्ता आत्यंतिकं किमपि सुखमनुभवंति। तृणान्यन्नानि च ये गोभ्यः प्रयच्छंति ते राजाधिराजाः पुत्रपौत्रप्रपौत्रपरंपरामुखविलोकनसुखसुधानिमग्ना भवंति। शृणु प्राकृतनानि वाक्यानि.

तेनाग्नयो हुताःसम्यक् पितरश्चैव तर्पिताः।
देवाश्च पूजिताः सर्वे यो ददाति गवाह्निकम् ॥
आदिर्गावो हि यज्ञस्य मध्ये चांते च पार्थिव।

क्षरंति ता हि देवानां क्षीराज्यममृतं सदा ॥
तस्माद्गावः प्रदातव्याः पूजनीयाश्च नित्यशः ।
स्वर्गस्य जंगमा ह्येताः सोपानानीह निर्मिताः ॥

तदेका गौर्दीयतामेतेभ्यः किरातेभ्यः.

नहुषः—यथाज्ञा मुनिवर्यस्य ( इत्युक्त्वा सवत्सां गामानीय ) किराता एतन्मुनेरस्यं मूल्यं गृह्यताम् ( इत्युक्त्वार्पयति. )

वृद्धः—पुत्रकाः! आजन्मतोऽद्यावधि पापेन क्षयमुपनीतामिदं वयो मया तदद्यैनामस्मै ब्राह्मणायैवार्पयाणि युष्माकं संमतिश्चेत्.

किराताः—आर्याः! सानंदमनुमोदामहे वयम्। यथाभिमतं कुरुत.

वृद्धः—भगवन्! भवादृशां भव्यानां संभाषा दर्शनं स्पर्शनं स्मरणं च पावनमेवेति शुश्रुम। तच्च सर्वं भवद्भिः सहास्माकं जातमिदानीं गामिमां गृहीत्वा कृतार्थान्नः करिष्यंति भवन्त इत्याशास्महे.

मुनिः—

एष वः प्रतिगृह्णामि गामेनां मुक्तकिल्बिषाः ।
निषादा गच्छत स्वर्गं मत्स्यैः सार्द्धं जलोद्धृतैः ॥

( इत्युक्त्वा गां प्रतिगृह्णाति. )

किराताः—परमनुगृहीता वयम्.

( इतिदंडवत्प्रणमंति. )

मुनिः—

यन्मया सुकृतं किंचिन्मनोवाक्कर्मभिः कृतम्।
दुःखार्त्ता जंतवस्तेन सर्वे संतु सुखावहाः॥

( इतिसूर्यमभिप्रणम्यवदति. )

( आकाशे. )

धन्यस्त्वं भृगुवंशमौक्तिकमणे धन्या दयादृक् च ते
धन्यो गोमहिमा च निस्तुलतमो यस्य प्रसादादमी।
हित्वाऽऽजन्मकृतानि दुष्कृतशतान्यापूर्णपुण्योच्चया
आरोहंत्समरावतीं जलचरैः सार्द्धं मुदा धीवराः॥

( इति वदन् विमानेनावतरति चित्रगुप्तेन सहितो धर्मराजः )

यमः—भगवँश्च्यवन! गोप्रदानपुण्यपरिपाकेन निष्कल्मषानमूनमरावतीं नेतुमागतोस्मीत्यनुजानीहि मां तां गंतुम्.

च्यवनः—भगवन्! धर्मराज! सर्वैः कुटुंबैः सहेमान् स्वर्गं प्रापयेति मे प्रार्थना.

यमः—प्रार्थनेति न वक्तव्यं मदीयेयमाज्ञेति वक्तव्यम्। यथायुष्मदाज्ञं कर्तुमत्राहितोस्मि.

चित्रगुप्तः—भगवन्नेतेषां कर्मणां का गतिर्विधेया?

यमः—मित्र! श्रीयमुनातीरवासिभिर्धीवरैः श्रीयमुनातीरे षष्टिवर्षसहस्राणि तपस्तप्त्वा निर्गताय मुनिवर्याय श्रीच्यवनाय

श्रद्धया गौरिका दत्ता तेनागण्येन पुण्येनागण्यान्यप्यमीषा-
मपुण्यानि नष्टानीति लिख्यताम्.

चित्रगुप्तः—(तथैव लिखित्वा) भगवन्! जलचराणाममीषां कर्माणि संति तेषां किं कर्तव्यम् ?

यमः—चित्रगुप्त! महामुनेर्भगवतश्च्यवनस्यानुग्रहेण सहवासप्रभावेण च मुक्ता मत्स्याः स्वकर्मभ्य इति लिख्यताम्.

चित्रगुप्तः—यथाज्ञा देवस्य (इत्युक्त्वा तथा लिखित्वा दर्शयति.)

यमः—(विलोक्य मुद्रया मुद्रयति) एत धीवरा एत धीवरा एत सह कुटुंबैः।

(इति धर्मराजेनोक्ते)—

मुनिः—

धीवरा अमरकांतकांतयो धीवरीभिरमरीभिराश्रुते।
व्योमयानमधिरोढुमागतास्ते च दिव्यवपुषोंबुजंतवः॥

तेनातीव प्रमोदामहे.

यमः—(तैश्च सर्वैः सह च्यवनं प्रणम्य) भगवन् गच्छामि.

मुनिः—गम्यतां शिवाःसंतु वः पंथानः (सर्वे आकाशमार्गेण गच्छंति).

नहुषः—भगवन्! अप्रतिमः किल ब्राह्मणानां महिमा क्षणसंग-

मेन पापपीवरा धीवरा अपि स्वर्गं गताः ।

मुनिः—राजन्नायं मदीयो महिमा किंतु जगद्वंद्याया गोरेवायं महिमा। जानात्येव महाराजो गवां महिमानम्.

गावः प्रदक्षिणीकार्या वंदनीयाश्च नित्यशः ।
मंगलायतनं गावः सृष्टा ह्येताः स्वयंभुवा ॥

इत्यादि बहुबहूक्तो महिमा भगवता व्यासेन.

नहुषः—भगवन् ! व्यासप्रसादाच्छ्रुतोपि महिमा युष्मत्प्रसादाद्दृष्टः

मुनिः—राजन् ! किं ते प्रियं करवाणि ?

नहुषः—भगवन् ! भवत्प्रसादान्मत्स्या धीवराश्च स्वर्गं गताः। ममापि यशो न प्रणष्टम्। किमतः परं प्रियं मे ? तथापीदमस्तु.

गाः पूजयंतु मनुजाः परिपालयंतु
प्रेम्णा परेण विषये मम सर्व एव ।
भक्तिश्च मे भवतु गोषु समस्तवंद्या
स्वात्माश्रितार्थितसमर्पणतत्परासु ॥

मुनिः—राजन् ! तथास्तु ( इतिवदन् निष्क्रांतः । )

नहुषः—भगवन् ! गविजात ! भवत्कृपयैव त्राता वयं सपरिवारास्तद्राजधानीं पुनर्मे पवित्रय पादपद्मरेणुभिः ।

गविजातः—यथाभिरुचितं महाराजाय ( इत्युक्त्वा सह राज्ञा

निष्क्रांतः । )

सूत्रधारः—भो भो भोजकुलमंडलावतंस कंस !

श्रीगोरक्षणतत्परा द्विजवराः सर्वे धराधीश्वरा
वैश्याः शूद्रवराः परेऽपि च नरा गोभक्तियुक्ताशयाः ।
सर्वेषां च सहायदो भव विभो त्वं सर्वभूमीश्वरो
गावः कामदुघाश्च संतु भवता संरक्षिता नः सदा ॥

इतिनःप्रार्थना ( इत्युक्त्वा प्रणमति. )

केशी—महाराज ! दृष्टं नाटकं ? मया यदुक्तमारंभसमय एव तत्सत्यं नवेति विचार्यम्.

कंसः—( सरोषमुत्थाय ) अपसरत दुष्टा अप्सरसो मम पूर्ववैरिणो विष्णोर्मूलभूतानां गवां ब्राह्मणानां च भक्तिं कारयितुं वः प्रयत्न इति ज्ञातं मया । निःसरत नगराद्बहिर्न चेत्प्राणांतदंडपात्रतां यास्यथ.

केशी—क्षम्यतां क्षम्यतां राजन् ! निरपराधाः खल्वेताः कस्यचित्प्रेरणया ताभिरभिनीतं रूपकमिदम्.

कंसः—( स्मृतिमभिनीय ) पितापि मे ममैवाहिताकांक्षी तद्वध्य एव मया खड्गेनानेन. ( इत्युक्त्वोत्तिष्ठति. )

दौवारिकः—( प्रविश्य ) देव ! देवक्या बालकः प्रसूतोऽतःपरं देवः प्रमाणम्. ( इत्युक्त्वा प्रणमति ).

कंसः–केशिन्! गच्छ पितरं मे कारागारावासं कुरु त्वर-याऽहमपि देवक्या अष्टमं गर्भं हंतुं गच्छामि.

केशी–यथाज्ञा देवस्य बद्धमेवतं विद्धि. (इत्युक्त्वानिष्क्रांतः)

कंसः–गतः केशी! त्वरितं गच्छाम्यहं देवक्याः सूतिकागृहम्
(इति वदन् स्खलन्मौलिर्निष्क्रांतः)

इति श्रीमत्केशवकृपाकल्पवल्लरीपल्लवायमाने गोपालचिंतामणिविजयनाम्नि नाटके चतुर्थोऽङ्कः

---

माहेश्वरात्मजनुषोऽङ्कशशाङ्कमौले
र्दासस्यवर्यगुरुकेशवधर्मसूनोः ।
एषाकृतिर्मम जटाशिवमित्रमौले-
र्गौरिगिरीशपदयोः कुसुमाञ्जलिःस्तात् ॥



# ॥ अथ पंचमोऽङ्कः ॥

(ततः प्रविशति सोद्वेगः सपरिवारः कंसः)

कंसः—केशिन्! देवा अप्यसत्यवचनसेवाजुषो भवंतीत्यद्यैव ज्ञातम्.

केशी—महाराज! कथमिव?

कंसः—पामरैस्तैर्देवक्या अष्टमो गर्भस्त्वां हंतेति मृषैवोक्तम्। यत्प्रत्ययेन मया क्रूरक्रूरतरनरकरणीयं भागिनेयवधरूपमकृत्यमपि कृत्यमिव कृतम्। देवक्या त्वद्यनिशीथे पुत्री प्रसूता.

केशी—महाराज! पुत्रीति न विश्वसनीया सापि हंतव्यैव. यतो बहुमायामयो विष्णुः केनापि प्रकारेण त्वद्वधं करिष्यत्येव.

कंसः—केशिन्! सत्यं तत एवाहं दीनदीनायाः करुणकरुणं रुदंत्या अपि देवक्या हस्तादाच्छिद्य चरणयोर्गृहीत्वा तां बालिकां शिलापृष्ठे समपोथयं यावत्तावन्मद्धस्तात्समुत्पत्य सद्यो दिवंगताऽष्टभुजा कापि देव्यदृश्यत.

केशी—(साश्चर्यम्) किमेतदापतितं!! ततस्ततः?

कंसः—ततो दिव्यालंकारा दिव्यांबरा दिव्यांगरागा दिव्यमाल्यमालिनी च सायुधाऽष्टमहाभुजा सा मां प्राह.

केशी—देव! किमाह?

कंसः—

किं मया हतया मंद जातः खलु तवांतकृत् ।
यत्र कुत्राऽपि पूर्वारिर्मा हिंसीः कृपणान् वृथा ॥

इति सरोषं मामुक्त्वा गगन एवांतर्हिताऽभूत्.

केशी—राजन्! जातेपि तस्मिन्न ते भयम् । यतोऽमराः समरभीरवः क्षेमशूराश्चेति नाविदितं देवस्य.

किं करिष्यति हरोपि हरिर्वा
किं चिरंतनमुनिश्च विरंचिः ।
पामराः किमपरेऽप्यमरावा
शौर्यधैर्यजलधेस्तव दुःखम् ॥

तथापि न खलूपेक्षणीया अणीयांसोप्यरय इति नीतिस्ततो विष्णुमूलोन्मूलनाय प्रयतामहे.

कंसः—साधु अमात्य! साधु । तथा कुरु.

केशी—राजन्! तथैव करिष्यामि परं बकीवकौ प्रेषितौ मया भगवन्मंदिरं प्रति ताभ्यां च तत्रत्या का प्रवृत्तिरुपलब्धेति ज्ञात्वाऽनंतरं तदनुरूपं करिष्यामः ।

( ततः प्रविशति बकः । )

बकः–जयतु जयतु महाराजोऽमात्यश्च. बकोहं प्रणमामि.

कंसः–आगच्छ बक! कुशलं ते?

बकः–देवप्रसादादेव.

केशी–वत्स! स्मृत एवागतोसीत्यतीव संतुष्टं मे स्वान्तम्। वद का प्रवृत्तिरुपलब्धा.?

बकः–देव! अमात्य! इतो गतयोस्तयोर्दिव्यस्त्रियोर्मध्य एका भूदेवी द्वितीया भारती देवी चासीत्.

केशी–ततस्ततः?

बकः–ताभ्यां देवकीपुत्रतां गंतुं प्रार्थितः परमेश्वरस्तदीयां प्रार्थनामंगीचकारेति भगवद्भक्तवेषधारिणा मया सर्व मुपलब्धं वृत्तम्.

केशी–तदीयोत्साहभंगाय प्रेषिता सा कापि त्वया दृष्टा न वा?

बकः–आमात्य! अच्छोदे सरसि स्नातुमवतीर्णेन मया सा दृष्टा। गता च सा भगवन्मंदिरम्। मन्ये साप्यधुनैवागमिष्यति.

बकी–( प्रविश्य ) जयतु जयतु महाराजोऽमात्यश्च.

कंसः–एहि पूतने! एहि। अस्ति कुशलंते ?

पूतना—देवप्रसादेन कुशलं मे.

केशी—वत्से! का वा वासुदेवस्य प्रवृत्तिरुपलब्धा त्वया?

पूतना—आर्या अमात्यवर्याः! युष्मदाज्ञया क्षीरसागरं गतया मया मायालक्ष्मीरूपेण बहुबहूक्तं वासुदेवाय न त्वयाऽवतारो गृहीतव्य इति तथापि न तेन मद्वचनं गृहीतम्। किंच क्वचिद्यमुनातीरनिकटे गोपालबालभावमंगीकरिष्यतीति मया भगवद्वचसा निश्चितम्। ततः परं देव एव प्रमाणम्.

केशी—(नेत्रे निमील्य क्षणं विचार्य च) देव! मन्ये वसुदेवेन देवकीपुत्रः कस्यचिद्गोपस्य गृहं प्रापितस्तत्पुत्री चात्राऽऽनीतेति.

कंसः—(सहासम्) केशिन्नतिभूमिकामारूढा ते भ्रांतिः। निगडनिबद्धस्य कारागाराभ्यंतरनिक्षिप्तस्य नक्तं दिनमप्रमत्तै रक्षकैः परिरक्षितस्य च कथमिव वसुदेवस्य बहिर्गमनं संभवेत्? अलमलमाकाशकुसुमकल्पयाऽनया कल्पनया.

केशी—(सोद्वेगं स्वगतम्) धिग् राजसेवापिशाचीं या नक्तंदिनं रक्तं पिबत्येव सेवकानाम्। प्रयत्नपरंपरयोपास्यमानापि न कदाचिद्यशः समर्पयति। परंत्वपयशःसमूहं तु पदे पदेऽभ्यर्पयति। पितैव मेऽत्रोपालंभपात्रं येन बा-

त्यादेवाहमीदृशस्य हिताहितानभिज्ञस्य सेवायां नियुक्तः। केदानीमन्या गतिः? स्वकृतस्य स्वेनैव कर्मणः फलं भोक्तव्यं यावज्जीवम् ( प्रकाशम् ) महाराज! युक्तमुक्तं महाराजेन वृद्धत्वस्खलितमेतत्। काऽतः परमाज्ञा महाराजस्य ?

कंसः–देव्या यदुक्तं तव पूर्ववैरी क्वचिज्जातस्तस्य प्रतिक्रिया क्रियतामद्य.

केशी–नाथ! नैतद्विषये कापि चिंता विधेया। पूतनोक्त्यनुसारेण यमुनातीरपरिसर एव क्वापि गोपकुटुंबे समुत्पन्नेन तेन भाव्यम्। ततोऽनुयमुनातीरमनुदिवसमनिर्दशा निर्दशाश्च बालाः पुरग्रामव्रजाकरेषु हंतव्याः। ब्राह्मणानां गवां च हिंसा तु प्रथमत एव प्रारब्धा तेन विष्णोर्निर्मूलताऽवश्यंभाविनीति मतिर्मे.

कंसः–युक्तमुक्तममात्येन.

केशी–पूतने! गच्छ निर्दशानानिर्दशांश्च बालान् मारयितुम्.

पूतना–यथाज्ञाऽमात्यस्य ( इतिनिष्क्रांता. )

केशी–बकासुरतृणावर्त्तासुरशकटासुरवत्सासुरव्योमासुराघासुरवृषभासुराः! यात यात त्वरया पुरग्राम-

घोषव्रजाकरेषु बालान्निहंतुम्। स्वाभिमतभूमिकाग्रहणेन महाराजस्याभिमतं संपादयत। न महाराजो युष्मत्कृतं साहाय्यं कदापि विस्मरिष्यति। ब्राह्मणा गावश्च प्रतिपथं पीडनीया यतस्ते ताश्च विष्णोर्मूलमिति नाविदितं वः।

**सर्वेदैत्याः**–( सहैवोत्थाय ) आर्याः ! युष्मदाज्ञानुसारेण सर्वं कर्तुं गतानेवास्मानवेत (इत्युक्त्वा प्रणम्य निष्क्रांताः)

**केशी**–महाराज ! गता एते करिष्यंसविशंकं सर्वत्र सद्यः प्रसूतबालकानां क्षयम्। कोऽतः परोस्ति महाराजस्य निदेशः ?

**कंसः**–केशिन् ! महाराजस्योग्रसेनस्य किं त्वया कृतम् ?

**केशी**–महाराजस्याज्ञोत्तरक्षणमेव कारागारावासी विहितः शृंखलाचरणश्च.

**कंसः**–साधु कृतम्। इदानीं निष्कंटकं मे राज्यम्। पीडयिष्ये देवावतरान् यादवान्। तद्याहि मत्पितृपक्षपातिनो यादवान् सर्वान् गृहीतुम्.

**केशी**–यथाज्ञा देवस्य ( इत्युक्त्वा प्रणम्य निष्क्रांतः ).

**कंसः**–गतः केशी तदहमपि परममित्राणां मे बाणासुरद्विरदभौमासुरजरासंधादीनामनुमतिं पत्रद्वारा गृहीत्वा

यादवानुन्मूलयितुं प्रयतिष्ये ( इत्युक्त्वाऽऽकाशमार्गेण-निष्क्रांतः )

( ततः प्रविशति नारदः कंसश्च. )

कंसः–महामुने ! देवा अप्यवितथवचनरचनया नरान् मोहयंतीत्यद्यैव मया ज्ञातम्.

नारदः–राजन् कथमिव ?

कंसः–देवैरुक्तं देवक्या अष्टमो गर्भस्त्वां हंतेति तदसत्यमेव जातम् । किं च देववचःप्रत्ययेन मया व्यर्थं देवक्याः पुत्रा हता इति खिद्यते चेतः ।

नारदः–( स्वगतम् ) नाधुना देवानां पक्षो गृहीतव्यः ( प्रकाशम् ) वत्स ! न खलु देवत्वं जात्यायत्तं ज्ञानायत्तं वा किंतु सद्गुणायत्तमेव । ये सद्गुणवंतस्ते देवा ये चासद्गुणवंतस्ते पूर्वदेवा इति मंतव्यम्.

कंसः–युक्तमुक्तं मुनिराजेन.

नारदः–वत्स ! क्व गताः सर्वेऽपि ते पार्श्ववर्तिनः ?

कंसः–देवर्षे ! देवकीप्रसूतां पुत्रीं पादयोर्गृहीत्वा यावच्छिलायामपोथयं तावन्मद्धस्तादुत्पत्य काप्यष्टभुजा देवी भूत्वा.

किं मया हतया मंद जातः खलु तवांतकृत् ।

यत्र कुत्राऽपि पूर्वारि–र्मा हिंसीः कृपणान् वृथा

इत्युक्त्वांऽतर्हिता.

नारदः–( साश्चर्यमिव ) राजन् ! देव्यास्तस्या वचनात्क-चित्ते पूर्ववैरी जात इति तु निश्चीयते । ततस्ततः ?

कंसः–अथ किम् ? तत एव पुरग्रामखेटखर्वटघोषव्रजेषु प्रेषिता लीलादलितदेवाः पूर्वदेवाः किंकरा मे । ते च सर्वत्रानिर्दशान् निर्दशांश्च बालान् भक्षयिष्यंति गोब्राह्मणहिंसां चाचरिष्यंति येन विष्णोर्निर्मूलताऽवश्यंभाविनी.

नारदः–( प्रहस्य स्वगतम् ) विपरीते विधौ विपरीतमेव सर्वं प्रतिभातीति लोकोक्तिर्न मृषा ( प्रकाशम् ) राजन् ! पराहितकरी केनेयं तुभ्यं बुद्धिर्वितीर्णा ?

कंसः–मुनिवर्य ! परमहितैषिणाऽमात्येन केशिनैव.

नारदः–वत्स ! तर्हि निहतप्रायस्ते पूर्ववैरीति ते निश्चयः ?

कंसः–कात्र शंका ? जाताया देवकीपुत्र्या व्यतीतान्येकादशवर्षाणि द्वादशवर्षीयश्चाऽयं द्वितीयो मासो वर्तते.

नारदः–राजन् ! क्व गत इदानीं ते परमहितैषी केशी ?

कंसः–भगवन् ! न वैरिणो निर्बला अप्युपेक्षणीया इति विष्णुमूलोन्मूलनाय पूर्वं गतानां च मे किंकराणां प्रवृत्त्युपलब्धये प्रस्थितः । प्रस्थितस्य च तस्य प्रयातान्यद्य पंच दि-

नानि परं मम तु तेन विना तानि पंचसमासमानि जातानि । क कदा वा तं परमहितैषिणममात्यं मे द्रक्ष्यामि । कुशली वा मेऽमात्यः । क संति च मे परमहितकारिणः पूर्वं गताः सर्वे किंकरा इति सर्वं भगवत एव परावरज्ञानिनां प्रमुखस्य मुखतो ज्ञातुमीहे.

नारदः—(स्वगतम्) जीवत्यस्मिन् गोब्राह्मणसुराणां पीडोपशांति र्न भविष्यति तदमुं त्वरितं महापराधिनं विधायभगवद्वध्यतापात्रं करोमि ( प्रकाशम् ) राजन् ! ज्योतिर्विदामयं विषयस्तथापि तवानुरोधात्पंचांगपत्रं विलोक्य यथाकथंचित्कथयिष्यामि.

( इतिपंचांगपत्रं प्रसार्य विलोकयति. )

कंसः—( विलोक्य ) भगवन् ! विचित्रमेतद्वः पंचांगपत्रम् नास्त्यत्र विघ्नवैरी देवो लक्षलाभान्विता सिद्धिर्बुद्धिश्च.

नारदः—राजन् ! गोब्राह्मणपीडनप्रवृत्तानां कुशलप्रवृत्तिविलोकने न विघ्नवैरिणो देवस्य किमपि प्रयोजनम् । लक्षलाभान्विता सिद्धिर्बुद्धिश्च तेभ्यो भयादेव दूरं पलायते । किंच देववैरिणां युष्माकं किं देवैः प्रयोजनम् ?

कंसः—( सहर्षम् ) साधु मुनिवर्य साधु ! निर्दैवतमेव मे पंचांगं रोचते.

नारदः-( स्वगतम् ) यादृशं रोचते ते तादृशमेव ते सद्यः पंचांगं भविष्यति ( प्रकाशम् ) तत एव तादृशं पंचांगपत्रं त्वदग्रे प्रसारितम्.

कंसः-कोन्यस्तादृश इंगितज्ञःस्यात् (पुनर्निपुणं निर्वर्ण्य) भगवन्! तिथिवासरयोगकरणनक्षत्राण्यपि नात्र पंचांगपत्रे विलोक्यंते.

नारदः-तत्पंचांगं ज्योतिर्विदामेव नास्माकम् । किंच ता अपि तत्तदधिष्ठात्र्यः संति देवतास्ततो न तासामपि त्वदग्रे प्रयोजनम् । किं बहुना.

तिथ्यात्र किं किमथवा वद वासरेण ।
योगेन किं किमथवा करणेन कार्यम् ॥
ऋक्षेण किं सकलमेव हि भूतमर्थं ।
भूपाल तुभ्यमुपदेक्ष्यति पत्रमेतत् ॥

कंसः-भूतार्थज्ञान एव मे प्रयोजनं नान्यत्र.

नारदः-तर्हि पृच्छ्यताम्.

कंसः-भगवन्नितः प्रथमं प्रस्थितायाः पूतनायाः का प्रवृत्तिरिति विलोकय.

नारदः-पत्रं परिवृत्य दर्शयति.

कंसः-( विलोक्य ).

अतसीकुसुमाभकांतिना ।
मृदुलारक्तसुपादपाणिना ॥
शिशुना स्तनपेन केनचि- ।
न्निहता शेत इयं तु का ? मुने ! ॥

नारदः–राजन् ! निमित्तमात्रमेतद्विलोकनीयम् । त्वया पृष्टं पूतनायाः का प्रवृत्तिरिति मया पत्रे विलोकिते काचित्स्त्री मृता दृश्यते तेन केनाचिच्छिशुना पीतप्राणेत्यनुमीयते.

कंसः–भगवन्नेदमनुमानम् । साक्षादियं पूतनैव दृश्यते। हा! सकलभूतलबालकरक्तपानव्यसिनिनि ! तवापि रक्तपानममुना बालेन कृतम्? हा ! धिग् दैवम्.

( इति निःश्वासं मुंचति )

नारदः–राजन् ! न विद्वांसोऽतीतं शोचंति.

कंसः–( धैर्यमालंब्य ) मुनिराज ! युक्तैवोक्तिस्ते अग्रतो दर्शय.

नारदः–( पत्रं परावर्तयति. )

कंसः–अहो ! कोपि महोत्सवः प्रवृत्तो दृश्यते । एकतो गोपा आनंदतः सालंकाराः परिभ्रमंति अन्यतो गोप्यश्च नृत्यंत्यो गायंत्यः क्रीडंत्यश्चानंदानिर्भरा दृश्यंते.

( अन्यतो विलोक्य साश्चर्यम्. )

प्रेंखोलनेन मृदुलांघ्रिहतं सभांडं ।
तेनैव हंत शिशुना विपरीतमेतत् ॥
विध्वस्तचक्रमपतच्छकटं किमेत–।
द्देवर्षिवर्य ! वद किं वदतीह चित्रम् ? ॥

नारदः–मन्ये केनचिच्छकटनिविष्टेनासुरेण भाव्यम्.

कंसः–( स्मृतिमभिनीय ) आः स्मृतं स्मृतं शकटासुरः खल्वयं शकटादविदूरे निष्प्राणो दृश्यते ! हा ! शकट शकट ! तवाप्येषा दशा ? मुने ! ततोप्यग्रतो दर्शय.

नारदः–यथाभिरुचितं वत्साय (इत्यग्रतो दर्शयति.)

कंसः–( विलोक्य. )

तृणावर्तः सोयं भुवि निपतितो हाऽद्य गगना–
द्विशीर्णस्कंधांसो दलितनिखिलांगोत्र निरसुः ।
अयं बालस्तस्योरसि च विभयो रिंखति मुदा
हसन् मन्येऽयं मे मृतिभयकरो न्वत्र भविता ॥

( इति वदन् बाष्पं मुंचति. )

नारदः–( स्वगतम् ) सत्यमेवानुमानं ते ( प्रकाशम् ) राजन् ! समाश्वसिहि समाश्वसिहि.

कंसः–मुने ! दर्शयाग्रतोपि.

नारदः–यथाभिरुचितं ते. (इत्यग्रतो दर्शयति.)

कंसः–(विलोक्य साश्चर्यम्) मुने! मुने! किमेतत्? जृंभमाणस्यास्य मुखे विश्वमपि निखिलं दृश्यते। मन्ये कश्चिदैंद्रजालिक एवायं बालक इति। तन्मातापि भयभीतेव विलोक्यते.

नारदः–एवमेव राजन्नेवमेव.

कंसः–(विलोक्य)

नवनीतचोरमेनं भंक्त्वा दधिमंथभाजनं भयतः।
वेगात्पलायमानं तमनुद्रवतीह तन्माता॥

(अग्रतो दृष्ट्वा) अहो गृहीत एवात्र चपलो बालो दाम्ना उलूखले बद्धश्च गोप्याप्यबलया। तन्मनो! निर्भयं भव विलोकितमिदानीं तदीयं बलम्.

नारदः–(स्वगतम्) मूर्ख! सोयं प्रेम्णा बद्धोस्ति न दाम्ना (प्रकाशम्) राजन्! युक्तमुच्यते महाराजेन.

कंसः–वर्द्धतेग्रतोपि द्रष्टुमाकांक्षा मे। तद्दर्शय.

नारदः–(पत्रं परावर्तयति.)

कंसः–(विलोक्य)

यमलार्जुनयोर्दिविस्पृशो–
र्दृढबद्धोलुखलोंऽतरं गतः॥
अयमाशु बभंज तावुभौ।

कुत एतद्बलमद्भुतं शिशोः ॥

(पुनर्विलोक्य) अहो! कौचिद्देवौ स्तुवीत एनं बालकम्
(पुनरग्रतो विलोक्य) अहो बहूनि वत्सयूथानि चारयंति गोपालबालकास्तपनतनयातीरे तत्रापि द्वयोर्गोपालपरिवृढयोर्विचित्राणि चरित्राण्यालोक्यंते.

नारदः—अथ किं? एवमेतत्.

कंसः—ननु दर्शयाग्रतोपि.

नारदः—ननु यथेच्छा ते (इति पत्रं परावर्त्यदर्शयति).

कंसः—अहो! किमेतत्?

गृहीत्वैव सलांगूलं प्रपदोर्युगलं त्वयम् ।
भ्रामयित्वा कपित्थाग्रे वत्सं पोथयति स्वयम्।

कथमयं वत्सपालकोऽपि भूत्वा वत्समारकतामंगीकुरुते? (निपुणं विलोक्य) आ! ज्ञातं ज्ञातम्। नायं वत्सो वत्साकारोऽपि तु वत्सासुरः प्राणांतं गतो विलोक्यते। हा वत्स वत्सासुर! त्वमप्यस्मदर्थमिमां दशां गतोसि? (इतिवदन् रोदिति.)

नारदः—राजन्! नेयं कातरतरनरता शोभते ते.

कंसः—(धैर्यमवलंब्य नेत्रे विमृज्य) भगवन्नवहितोस्म्यग्रतो विलोकयितुम्.

नारदः–पश्येदमपि विचित्रं चरित्रम्.

कंसः–( सादरं विलोक्य. )

हा हा बकोयमधुना शिशुनाऽमुनैव ।
तुंडे विपाट्य निहतोऽतिबलोऽबलेन ॥
आनंदतः कुसुमवृष्टिकिरोऽमरेंद्रा–
स्तं च स्तुवंति बत गोपगणा अपीमे ॥

तदेतान् हन्मि ( इत्युत्थातुमिच्छति. )

नारदः–चित्रमेतत्.

कंसः–विस्मृतमिदं मया । हंत ! बकस्यापि न कुशला प्रवृत्तिरित्यनुमीयते.

नारदः–राजन् ! संपूर्णं विलोक्य विचारयिष्यावः

कंसः–युक्तैव मुनेरुक्तिः । परिवर्त्यतां पत्रम्.

नारदः–तथा ( इति पत्रं परावर्त्तयति. )

कंसः–( विलोक्य ) सुंदरोयं योजनविस्तृतो महासर्पाकृतिर्गिरिवर्यस्तस्येयं सुंदरी दरी तस्या अमी सानंदं निःसृत्य साश्चर्यमिव पीतांबरधरममुं पूर्णप्रेमाश्रुवृष्टिभिर्दृष्टिभिः पश्यंति किमेते ? ( निपुणं विलोक्य ) हंत!! नायं गिरिः किं तु सर्पाकृतिरघासुरोयं प्रोषितप्राणः शेते सखे सखे! त्वमपि बकीबकावनुगतोसि? त्वयापि गोपाल-

बालकोयं न पारितो जेतुम् ? अथवा सगोगोपकुलं गोपकुमारममुं गिलता त्वया कृतं सर्वं मदीयं कार्यं परं मदीयमंदभाग्यमहिम्ना सर्वं निष्फलतां नीतमनेन चपलेन गोपालबालेन.

नारदः—राजन्नितोपि दीयतां दृष्टिः ।

कंसः—मुने ! दृष्टिप्लुष्टिकरमेतन्मे । अमी पापा अघासुरं हत्वाऽमंदानंदाशया यमुनापुलिने दध्योदनं भुंजते. ( पुनर्विलोक्य ) वत्सान् ! व्योममार्गेणापहरता विघ्नितमेषां भोजनसुखं विधात्रा.

नारदः—यथाह राजा.

कंसः—( पुनर्विलोक्य ) भगवन्नितो वत्सांस्ततो वत्सपालांश्चापहरता विरंचिना विरचितमविस्मरणीयं साहाय्यं मे.

कवलपाणिरयं यमुनातटे ।
प्रतिवनं भ्रमति स्वयमेकलः ॥
स्वजनवत्सवियोगविशीर्णधीः ।
प्रतिगिरि प्रतिकुंजमविश्रमम् ॥

तेन संतुष्टं स्वांतं मे.

नारदः—राजन् ! दीयतामितो दृष्टिः

कंसः—( विलोक्य सोद्वेगम् ) हंत कोप्यप्रतिमः प्रतापोऽस्य

गोपालबालकस्य.

समर्प्य वत्सान् सहवत्सपालै-।
श्चतुःकिरीस्था चरणौ स्पृशन् सन् ॥
क्षमापयत्येष चिरं विरंचि-।
श्चिरंतनोप्येनमहो कुमारम् ॥

नारदः-एवमेतद् दीयतामितो दृष्टिः।

कंसः-( साश्चर्यं विलोक्य. )

कालाहिमस्तकशतेषु धृतांघ्रिपद्मो ।
नृत्यं विधत्त इह निर्भय एष बालः ॥
नागांगनाः प्रणयतः प्रणमंति चैनं ।
स्वप्राणनाथपरिरक्षणमात्रकामाः ॥

भगवन्! कोयं नागः ?.

नारदः-राजन्! सोयं कालियो नागः।

कंसः-अहो यो नागांतकादपि न बिभेति सोपीमां दशां-प्रापितोऽनेन बालेन.

नारदः-राजन्! कोऽत्रसंदेहः। विलोक्यतामिदमपि.

कंसः-( विलोक्य ).

भांडीरकाख्यवटतस्त्वविदूर एव
कोयं किशोरमपहृत्य पलायतेऽमुम् ?।

स्कंधस्थितेन बत तेन हतश्च मुष्ट्या
वज्राहताद्रिरिव कः पतितश्च भूमौ ? ॥

( निपुणंनिर्वर्ण्य ) हा प्रलंबासुरोऽयं मयपुत्र एव दृश्यते। वत्स! कथं तवापीयं दशा ?

नारदः—कंस ! कंस ! अलं विषादेन चित्रमेतत् । विलोक्य तामन्यतोपि.

कंसः—( विलोक्य ) भगवन् ! तालवनमेतद्रासभरूपैरसुरैर्व्यसुभिर्व्याप्तं विलोक्यते। सज्ञातिबांधवो मित्रं मे धेनुकासुरोप्यमूभ्यां गोपकिशोराभ्यां निधनं नीतो यतः सगोगोपालकावेतावत्र हर्षतो विहरतः।

( किंचिदविदूरे विलोक्य ) अहो गोपालबालस्यास्य गोभक्त्यतिशयो यतोत्र गोधनमखिलं कवलीकुर्वन् दवानलोपि. ( इत्यर्द्धोक्ते ) देवर्षे ! दिव्याक्षराणां पंक्तिरप्यत्र दृश्यते । किमेतस्या हार्दम् ? निवेदय ।

नारदः—( विलोक्य ) राजन् ! ज्वालाजालाकुलं दावानलं विलोक्य कृष्णेन यदुक्तं तदत्र लिखितमस्ति । श्रूयतां यदि कौतुकम्. ।

"यदि गोष्वचला भक्तिर्यदि प्राणाधिकाप्रियाः ।
गावो मे यदि सर्वस्वं गावो मे यदि दैवतम् ॥

तर्हि दावानलो लीनो मन्मुखे भवतु क्षणात् ॥"

कंसः—इत्युक्त्वा दवानलमपि निःशेषं पपौ? अद्भुतोयं चमत्कारः। परमः पूर्वपक्षी गोपालबालोयं मे यो दुःसहान्यपि दुःखानि स्वीकुर्वन् विष्णुमूलभूतानां गवां रक्षणाय दीक्षित इव लक्ष्यते.

नारदः—राजन्! विलोक्यतामेतत्.

कंसः—( विलोक्य ) मुनिवर्य!

मेघैर्व्याप्तमिदं नभो घनघनैर्विद्युल्लतालंकृतै ।
रासाराः परितः पतंति न मही निम्नोन्नता लक्ष्यते
गोपा गोप्य इतस्ततो निजशिशूनाच्छाद्य दीनान्निजै-
रंगैर्बाष्पमुखाः सुखाश्रयकृते धावंति वर्षाहताः॥

गोकुलान्यपि च वत्ससंकुला- ।
न्याकुलानि करकातिवृष्टिभिः ॥
कुर्वते नु परितः पलायनं ।
स्वाश्रयाय पुलकांचितान्वहो ॥

कृतमिंद्रेण मे महत्साहाय्यम्.

नारदः—अत्र कः संदेहः? परमितोऽपि विलोक्यताम्.

कंसः—( विलोक्य साश्चर्यम् ) हा! किमेतत्.

छत्रीकृत्य क्षितिधरममुं हंत गोवर्द्धनाख्यं ।
हस्तेनायं कमलमृदुना कोपि गोपालबालः ॥
गोपान् गोपीरपि च निखिलं गोकुलं नष्टवर्षा-।
तंकं हर्षामृतजलनिधौ मग्नमेषः करोति ॥

( पुनर्विलोक्य ) नैतावदेव.

इंद्रोप्ययं सभयविस्मय एनमत्र ।
प्रेम्णा प्रणम्य पतितो गलितस्मयः सन् ॥
तत्पादपद्मनिकटे मुकुटं निधाय ।
प्रत्यग्ररत्नजटितं स्तुतितत्परोस्ति ॥

( अग्रतोवलोक्य ) नैतावदेव। कांचने सिंहासने तमेव गोपालबालं स्वयमिंद्रोपि कामधेनुपयोभिरैरावतकरोद्धृतैर्मन्दाकिनीपयोभिश्चाभिषिंचति । हंत कोयं कालविपर्यासो यत्र देवा अपि गोपालबालसेवापरायणा भवंति.

नारदः—दृश्यतामेतदपि दर्शनीयम्.

कंसः—( विलोक्य साश्चर्यानंदं स्वगतम्. )

केयं माया कथमयमिहानेकतामेक एव ।
प्राप्तः प्रावृड्घनघनरुचिर्बालगोपालवेषः ॥
राकाचंद्रोज्वलतरशरद्रात्रिव क्वेऽत्र रम्यां ।
गोपीवृंदैः सह निरुपमां रासलीलां विधत्ते ॥

सत्यं न सार्वभौमा अपि परमानंदपारावारस्यास्य बिंदुमप्यनुभवंति (प्रकाशम्) भगवन्नेवं निर्मर्यादोयं गोपालबालः प्रचंडदंडपात्रतामनुभविष्यति.

नारदः—वत्स चित्रमेतद्। विलोक्यतामन्यदपि.

कंसः—( विलोक्य. )

वृषभमतिमदाढ्यं हंत हंति प्रसह्य।
प्रबलमिह विषाणे संप्रगृह्यातिवीर्यः॥
हयमयमपि हेषात्रासिताशेषघोषं।
यमसदनममंदानादरं हा निनाय॥

(निपुणं निर्वर्ण्य) हा हंत!! किं वृषासुरकेशिनावपि बालेनानेन निहतौ? सखे! केशिन्! केशिन्! केयं ते विपरीता दशा.? ( इति वदन् मूर्च्छया पतति. )

नारदः—राजन्! समाश्वसिहि.

कंसः—भगवन्! कोयं दुष्टचित्रकारो येनेदृशानि मिथ्या चित्राणि चित्रितानि? प्राणांतदंडपात्रं मे स चित्रकारः।

नारदः—राजन्नैतानि मृषा चित्राणि किं तु भूतार्थान्येव चित्राणि ततो न चित्रकारस्यापराधः।

कंसः—महामुने! किं सर्वाण्यपि चित्राणि भूतार्थान्येव? तर्हि क्वास्ति स गोपालबालो येन मे सर्वेपि पुरुषा नि-

हताः ?

**नारदः**–(स्वगतम्) गोब्राह्मणहिंसानिरतोयं त्वरया यमातिथिर्यथास्यात्तथा विधेयम् ( प्रकाशम् ) राजन् ! नायं गोपालबालः किं तु देवक्या अष्टमः पुत्रस्त्वत्तो बिभ्यता वसुदेवेन स्वमित्रस्य नंदस्य गृहे गुप्तं स्थापितः कन्यां च तस्याऽऽनिनायात्र याऽष्टभुजा दिवं गता ततो न देवा असत्यवादिन इति मंतव्यम्.

**कंसः**–( स्मृतिमभिनीय ) हा ! केशिनापि स्वबुद्ध्याऽयमर्थ ऊहितः परं न मया तद्वचः कर्णे कृतम्। हंत हंत केशिन् ! केशिन् ! कोन्यस्त्वादृशो मे मंत्री भविष्यति ( इति वदन् रोदिति. )

**नारदः**–( स्वगतम् ) अत एव यत्र मंत्री तत्रैव त्वयाऽपि त्वरया गंतव्यम् ( प्रकाशम् ) राजन्नतीते न शोकः कार्यो धीरेण.

**कंसः**–( सकोपम्। निष्कोशमसिं गृहीत्वा ) धिग् रे वसुदेव ! धिक् त्वामेष न भविष्यसि (इत्युक्त्वा हंतुमभिधावति.)

**नारदः**–(उत्थाय) राजन् ! राजन्नैतत्कर्तव्यम्। वसुदेवे हते न तत्पुत्रोऽत्रागमिष्यति. जीवति तु वसुदेवे पितृस्नेहादवश्यमागमिष्यति ततो नाधुनाऽयं हंतव्यः.

कंसः--मुने ! सप्तमुक्तं देवकीवसुदेवौ पुनः कारागारवासिनौ विधाय तयोः पश्यतोस्तत्पुत्रौ हनिष्यामि.

नारदः-राजन् ! गम्यत इदानीम् । निवेदितं सर्वं त्वदपेक्षितं पत्रेणानेनातः परं महाराजस्य मनोवृत्तिरेव प्रमाणम् ( इत्युक्त्वा निष्क्रांतः )

कंसः-भगवान्नारदोपि गतो बहूपकृतं तेन सर्वभूतार्थवृत्तनिवेदनेन मे.

संबंधिनोपि कुटिला वसुदेवतुल्या ।
भूमौ भवंति कृतिवाग्हृदयेषु भिन्नाः ॥
पापं परं परिणतौ स्फुटतां प्रयाति ।
प्रायः कुरोग इव गोपित ईदृशानाम् ॥

भवतु चाणूराद्यैः सह विचार्य वसुदेवपुत्रयोरानयनार्थमक्रूरमेव प्रेषयिष्यामि ( इत्युक्त्वा निष्क्रांतः )

इति श्रीमत्केशवकृपाकल्पवल्लरीपल्लवायमाने गोपालचिंतामणिविजयनाम्नि नाटके पंचमोऽङ्कः

स्मरहरपददासो विठ्ठलेशात्मजन्मा ।
विबुधमणिगुरुश्रीकेशवार्यैकशिष्यः ॥
परमशिवपरश्रीझंडुभट्टानुजन्मा ।
स्वकृतिकुसुममालां श्रीशिवायार्पयामि ॥

# ॥ अथ षष्ठोऽङ्कः ॥



( ततः प्रविशति रामकृष्णाभ्यामुपास्यमानोऽक्रूरः )

अक्रूरः—वत्सौ ! बहुकालाभिलषितोर्थ आप्त इदानीं मया.

श्रीकृष्णः—आर्य ! अपि कुशलं नौ मातापित्रोर्यादवानां च.

अक्रूरः—वत्स ! जीवति कंसे कुतः कुशलाशापि यादवानाम्.

बलभद्रः—आर्य ! कथमेवं स्ववंशीयेष्वपि द्वेषमाचरति पापः कंसः ?

अक्रूरः—वत्स ! नारदोपदेशेन देवतावतारानेव यादवान् गणयति न नरान् स्वयं च कालनेम्यवतारः प्राग्विष्णुना हतोत्रापि देवकीपुत्रत्वमुपगच्छता विष्णुनैव वधं प्राप्स्यतीति कृतनिश्चयो विष्णुमूलभूतानि भूतानि गोब्राह्मणादीनि विष्णुभक्तान् यादवांश्च पीडयतितरां नितराम् ।

श्रीकृष्णः—आर्या ! आर्याणामत्रागमनं केनोद्देशेन जातमिति ज्ञातुमीहे ।

अक्रूरः—वत्स ! गतेह्नि समागतेन श्रीनारदेन श्रीमदीयं स-

वंचरितं कंसाय निवेदितं ततः क्रुद्धेन तेन धनुर्यागविलोकनव्याजेनात्र समानीतौ रामकृष्णौ कुवलयापीडेन हस्तिना चाणूराद्यैर्मल्लैश्च घातयिष्यामीति निश्चित्य युवयोरानयनायाहमाज्ञप्तो देवकीवसुदेवौ च पुनः कारागारे निक्षिप्तौ। स्वकीयः पितोग्रसेनोपि कारागारावासः कृतः। पीडयति प्रतिक्षणं गोब्राह्मणकुलानि यादवांश्च। किंचायुतं गावोऽधर्मेण हृतास्तासां च किं करिष्यतीति न बोधपदवीमवतरति बुद्धिर्मे.

श्रीकृष्णः–आर्य ! अवश्यमेव मया तत्रागंतव्यम् ।

पित्रोर्न बंधनमसह्यतमं मनो मे ।
नाप्यौग्रसेनमपि यादवपीडनं वा ॥
हाहा ! तथा व्यथयतिस्म यथानुवेलं ।
गोपीडनं कृतमपुण्यतमेन तेन ॥

तदेतावौ यशोदानंदौ मथुरागमनाय प्रार्थयामहे ।

बलभद्रः–एवमेतत् । तयोः संमतिमंतरा न पदात्पदमपि गंतुं शक्यत आवाभ्याम् ।

अक्रूरः–युक्तमुच्यते युवाभ्याम् । एत गच्छामः (इतिनिष्क्रांताः ).

( ततः प्रविशतो गोप्यौ. )

चंद्रभागा–सखि ! विशाखे ! श्रुतं मयातिक्रूरोऽक्रूरो हृदयसर्वस्वं नः सर्वासां श्रीनंदनंदनं मथुरां नेष्यतीति.

विशाखा–श्रुतं मयाप्येतत्.

चंद्रभागा–किं तद्विषये श्रीवृषभानुनंदिनीप्रमुखा अपि न कमपि प्रतीकारं करिष्यंति ? न माता यशोदा न तातो नंदो वा तं निवारयिष्यंति ?

विशाखा–चंद्रभागे ! श्रीराधिकाप्रमुखाभिः सर्वाभिः श्रीमथुराप्रयाणनिवृत्तये तथातथा प्रार्थितं यथा वज्रोपि स्फुटेत्पर्वतोपि रुद्याच्च। मात्रा श्रीयशोदया तातेन श्रीनंदेन च बहुबहुप्रकारैर्निवारितः श्रीनंदकुमारो 'निरवधिवात्सल्यरसपीयूषपूरपूर्णमानसौ मातापितरौ मे परमप्रेमपीयूषपूर्णस्वांता गोप्यश्च न खल्वहं युष्माकं संमतिमंतरा मथुरां प्रयास्यामीति निश्चितचित्ततां स्वीकृत्य परित्यज्य चोद्वेगवेगमभिनवातिथितया विष्णुरूपस्यास्य तातस्याऽक्रूरस्य मनोविनोदायास्यां रात्रौ नाटककलाकुशलाभिरप्सरोभिरभिनीयमानं प्रेक्षणकं सर्वैर्युष्माभिर्विलोकनीयं तदनंतरं च यथायुष्मत्संमति करिष्य' इत्युक्तवान्.

चंद्रभागा–वचनेनानेन प्रयाणपराङ्मुखः श्रीकृष्ण इति

मे प्रतिभाति। ततस्ततः ?

विशाखा–तदधुनाहं मातुर्यशोदाया आज्ञया गच्छामि सर्वा अपि गोपीः प्रेक्षणकप्रेक्षणायामंत्रयितुम् ।

चंद्रभागा–साधयतु भवत्यहमपि नंदराजपरममित्रस्योपनंदस्य गृहं गृत्वा निवेदयाम्येतद्वृत्तम् ( इतिनिष्क्रांते ).

( ततः प्रविशति गोपगणावृतो नंदो गोपीगणावृता यशोदा रामकृष्णसहितोक्रूरश्च. )

श्रीकृष्णः–श्रीदामन् ! प्रेक्षणकप्रेक्षणायागतैः सर्वैर्गोपवृंदैर्गोपीवृंदैश्च संकीर्णोयं सभामंडपस्तदाज्ञापय सूत्रधारं नाटकप्रयोगारंभाय.

श्रीदामा–यथाज्ञा देवस्य ( इत्युक्त्वा ) सूत्रधार ! प्रारभ्यतां प्रेक्षणकम् ।

सूत्रधारः–यथाज्ञाभगवन्मित्रस्य (इति नेपथ्याभिमुखमवलोक्य) प्रिये ! इतस्तावत् ।

नटी–( प्रविश्य ) को नियोग आर्यपुत्रस्य ?

सूत्रधारः–प्रिये ! भगवतः श्रीकृष्णस्याज्ञया गोभक्त्यभ्युदयं नाटकमभिनेतव्यं तद्रंजय समाजसमागतमनांसि प्रसंगानुकूलेन संगीतेन.

नटी–यथाज्ञार्यपुत्रस्य ( इति गायति. )

श्रेयस्तनोति धनधान्यसुपुत्ररत्ना
न्यानंददानि वितरत्यपि हंति रोगान् ।
सर्वान् क्षणात्परममोक्षमपीह धत्ते
गोभक्तिरत्र कुरुतेऽभ्युदयं न कं कम् ॥

नेपथ्ये—साधु सूत्रधाराप्रिये ! साधु । गोभक्तिरत्र कुरुतेऽभ्युदयं न कं कम् (इति पठति.)

सूत्रधारः—(साश्चर्यम्) प्रिये ! कालयवननगरनिवासिनीनां विलासिनीनां वृंदं गोत्रिरात्रव्रतनिमित्तं स्वपूजितां गां नदीतीरं नयति तस्यायं गीतध्वनिः श्रूयते । तदेहि तदुत्तरकरणीयाय सज्जीभवावः (इत्युक्त्वा निष्क्रांतौ नटीसूत्रधारौ.)

(ततः प्रविशति गंधाक्षतपूष्पपुजितां सुवर्णनूपुरां सुवर्णशृंगीं सुवर्णश्रृंखलां च गामनुगच्छन् कामिनीसमूहः । )

स्त्रियः—

मातः कामदुघे नमोनम इदं तुभ्यं मुहुः कुर्महे
त्वं मातापितरौ त्वमेव च गुरुस्त्वं दैवतं त्वं गतिः ।
त्वं सर्वस्वमिहासि नः प्रतिदिनं त्वं पालयास्मान्निजैः
प्रेमालोलविलोकनैरनुपमैः सर्वं कुटुंबं च नः ॥ १ ॥

अयि कामदुघे ! जगतां जननि ! त्वमिव त्वमसीह धरावलये ॥
निजभक्तजनार्थितपूर्तिविधौ प्रणयिन्यचलातुलवत्सलता ॥

गोपाः–अहो ! भक्त्यतिशयोऽमूषाम्.

गोप्यः–संतोषयति श्रवणेंद्रियाणि नः श्रीगोमहिमगीतमिदम्.

नंदः–कालयवनपुरेपीदृशी गोभक्तिरिति परमं विस्मयकारणम्.

अक्रूरः–आर्य ! धर्मचर्यायां सर्वत्र स्वातंत्र्यं प्रजानां विना कंसराज्यम्.

स्त्रियः–( पुनर्गायंति. )

अये मातर्मातः सुरभि! भवतीं सद्गुणवतीं ।
परप्रेम्णोपास्य क्षणमपि जना भूमिवलये ॥
अपुत्राः सत्पुत्रा अनिशमधना निस्तुलधना ।
अविद्याः सद्विद्यामृतरसजुषः संति नहि के ? ॥

मातर्जगज्जननि कामदुघे निपीय ।
स्वच्छं पयो मणिनिभं सरितोऽतिरम्यम् ॥
भुक्त्वा च नीलमणिनीलमलं तृणं त्वं ।
नेत्राणि नस्तु सुखयेस्त्वरया निजानाम् ॥

( इतिसभक्त्युद्रेकंप्रणमंति. )

यशोदानंदौ–अहो ! साक्षात्कामधेनुरेवेयं धेनुर्नेत्रानंदं जनयति नः

गोपा गोप्यश्च–एतासामिव गोभक्तिः केषां मनोरथपूरान्न पूरयेत्?

नेपथ्ये–

लोकाः पलायत पलायत निर्विलंबं।
मत्तेभकुंभतटपाटनपंडितोयम्॥
निर्भिद्यपंजरमभेद्यमभिक्रुधांधः।
सिंहोऽधुनाऽतिविकटोग्रसटोभ्युपैति॥

स्त्रियः–हा! किं कर्तव्यम्? क्व गंतव्यम्? कोधुना धेनुमिमां प्रचंडपंचाननाद्रक्षिष्यति.?

(ततः प्रविशति प्रचंडतरनखरः केसरी.)

नंदाक्रूरौ–(युगपत्खड्गमुद्यम्य सक्रोधमुत्थाय) धिग्रेपाप! मुंच धेनोः पंथानं न चेन्न भविष्यसि.

श्रीकृष्णः–आर्यौ! प्रेक्षणकमेतत्।

नंदाक्रूरौ–विस्मृतमेतदावाभ्याम्। (इत्युक्त्वोपविशतः).

(स्त्रियः सर्वाः सभयं पृथक्पृथग्रथ्यासु प्रद्रुत्य निष्क्रांताः)

यशोदा–गोप्यः! कंपते मे हृदयं श्रीधेनुदेव्यास्तद्भक्तिमतीनां च सतीनां किं भविष्यतीति चिंतया.

गोप्यः–देवि! मा चिंतां कुरु गोभक्तिरेव ता रक्षिष्यति.

(ततः प्रविशति पाशबद्धा धेनुर्नंदा कालचंडो व्याधस्तत्पत्नी

कर्कशा तत्किंकराश्च. )

नर्मदा–( सास्रं सांजलिबंधम् ) भ्रातः कालचंड ! विज्ञापयामि किल मुंचेमां सर्वदेवमयीं गोमातरम्.

कालचंडः–किमियं ते माता ? नार्य्यास्ते धेनुः कथं माता. ?

नर्मदा–न केवलं ममैवेयं माता किंतु सर्वस्य जगतोप्येषैव माता.

कालचंडः–कथं पशुजातेरप्यस्याः सर्वस्य जगतोपि मातृत्वं संभवेत्.

नर्मदा–शृणु कालचंड !

विना गव्यानि हव्यानि कव्यानि च भवंति नो ।
भव्यैर्हव्यैश्च कव्यैश्च विना यज्ञा भवंति किम् ? ॥
यज्ञाभावे कुतो वृष्टिर्वृष्ट्यभावे कुतो जगत् ? ।
ततो जगज्जनन्येषा हव्यकव्यप्रवर्षिणी ॥
धेनुः स्वभक्तजनताकामधेनुरनुक्षणम् ।
पूजनीया वंदनीया पालनीया शुभेप्सुभिः ॥
सर्वेषां सुखवर्याणामास्पदं परमं हि गौः ।
इत्युक्तं धर्मशास्त्रेषु सर्वेष्वपि मुनीश्वरैः ।

तन्मुंच जगन्मातरमिमां गां सकललोककल्याणाय तव च कल्याणायेति प्रार्थना मे.

कालचंडः–तादृशानि वचांसि त्वार्यप्रजानां मान्यानि न वयं

ताद्दशानि वचांसि सत्यानि मन्यामहे.

नर्मदा–मा संतु मान्यानि ते तानि वचनानि परं यस्मै लाभाय गृहीतेयं त्वया धेनुस्ततो द्विगुणं चतुर्गुणं वा धनं गृहीत्वा मुच्यतामेषा.

कालचंडः–कोर्पयिष्यति चतुर्गुणं धनं?

नर्मदा.–शंभुशर्मा मे श्वशुरः शिवशर्मा च मे पिता ततश्चतुर्गुणं ततोप्यधिकं वा मदुक्त्या तुभ्यं दास्यति.

कालचंडः–न सर्वेपि त्वादृशा विचारविकला ये निरर्थं पश्वर्थे चतुर्गुणं धनमर्पयेयुः।

नर्मदा–यदि न विश्वासस्ते चित्ते तर्हि–

गृहाणेमं तारानिकररुचिरं हारममलं।
महामूल्यं रत्नांगदयुगमिदं नूपुरयुगम्॥
इदं नानारत्नोज्वलमपि नमामि प्रणयत–।
स्ततस्त्वं मुंचेमां भुवनजननीं मंगलदुघाम्॥

(इत्युक्त्वा सर्वाण्याभरणान्यंगेभ्य उत्तार्य तदग्रे स्थापयति.)

कालचंडः–न वयं धनाभिलाषिणो रंकाः। संति मे महाराजसमर्पितानि बहूनि भूषणानि.

कर्कशा–रे रे मूर्ख! किमनया धेन्वा? गृहीत्वा रत्नाभरणानि परित्यज्यतामेषा.

कालचंडः—रंडे रंडे ! त्वमेव मूर्खा नेदं गोमूल्यम्.

नर्मदा—दासवर्य ! यदि नैतद्गोमूल्यं तर्हि त्वमेव यन्मूल्यं कथयिष्यसि तदप्यर्पयिष्यामि.

नंदः—धिग् निष्ठुरतां व्याधस्य.

अक्रूरः—ईदृशैरेव पापैर्दुर्दशां नीतास्माकं भारतभूमिः ।

गोप्यः—धन्या खलु नर्मदा या कालप्रतिमात्कालचंडादपि न बिभेति.

गोपाः—धिगूरे कर्मचंडाल कालचंड ! कस्त्वं प्रणयात्मार्थयंतीम् ब्राह्मणपुत्रीं न प्रगणय्य गां पाशान्नमुंचसि ? एष न भविष्यसि ( इत्युक्त्वोद्यतदंडा उत्तिष्ठंति. )

श्रीबलभद्रः—प्रियमित्राणि मे सुदामस्तोकप्रमुखा गोपा अलमावेगेन प्रेक्षणकमेतत्.

गोपाः—विस्मृतमिदमस्माभिः ( इति पुनरुपविशंति. )

कालचंडः—किं पुनस्त्वं गोमूल्येनान्यदर्पयिष्यासि ?

नर्मदा—

रम्या हर्म्यावलिरनुपमा कोशपंक्तिः समग्रा ।
ग्रामान् क्षेत्राण्यपि मम पितुर्मत्पतेश्चापि सर्वम् ॥
सर्वस्वं ते वितरितुमहं दास शक्तास्मि गां चेत् ।
पाशान्मुक्तां रचयति भवान्नात्र संदेहलेशः ॥

नैतावदेव यावज्जीवं च नोपकारं ते विस्मरिष्यामि.

**कालचंडः**—न मे ग्रामैर्न क्षेत्रैर्न कोशैर्न सर्वस्वेन च ते प्रयोजनम्। अस्ति ममापि तत्सर्वं महाराजप्रसादेन। मांसविक्रयिणो वयं मांसेनैव नः प्रयोजनम्.

**नर्मदा**—दासवर्य ! यद्येवं तर्हि—

**मां निहत्य सहसाऽसिनाऽमुना बालचंद्रमिव बालकं च मे ।**
**प्राप्तमांस उरुपाशयंत्रितां लोकमातरमिमां विमुंच गाम् ॥**

इति मे सप्रणामं प्रार्थना.

(इति वदंती व्याधस्य पादयोः पतति ).

**गोप्यः**-( सस्नेहास्रम् ) धन्यासि नर्मदे ! धन्यासि.

**कालचंडः**—किं वृथा प्रलपसि ? जानासि महाराजं कालयवनम् ?

**नर्मदा**—जानामि योस्या नगर्य्या अधिपतिः ।

**कालचंडः**—तर्हि तदर्थमियं मया गृहीता । न खलु महाराजो राक्षसो येन मनुष्यमांसमपि खादेत् । तद्गच्छ नचेत्पश्यंत्यास्ते किंकरा मे गामेनां हनिष्यंति । को वा कालयवनाज्ञामुल्लंघयितुं शक्तस्तत्पलायस्व पलायस्व.

**नर्मदा**-( सास्रं सांजलिबंधं च ) भ्रातः कालचंड! प्रथमं मामेव घ्नंतु किंकरास्त इति प्रार्थना मे.

**कालचंडः**—नैवं कदाचिद्भविष्यत्यपेहि पापे ।

नर्मदा–(पुनः सप्रणामम्) भ्रातर्भ्रातः क्षमस्व क्षमस्व नालंकारैर्न सर्वस्वेन नापि मत्प्राणैर्मत्पुत्रस्यापि च प्राणैर्मोक्तुं शक्यते त्वया धेनुस्तर्हि कोप्यस्ति धेनुमोक्षोपायो न वा? अस्ति चेन् निवेद्यतां नास्ति चेन्न जीवत्यां मयि त्वं तवानुचरा वा गोवधं कर्तुं शक्तास्त्वां द्वित्राँश्च तेऽनुचरान्निहत्य प्राणांस्त्यक्ष्यामि तदनंतरं यद्भावि तद्भविष्यतीति निःशंकमवगंतव्यम् (इत्युक्त्वा बद्धकच्छा तदीयमेव निष्कोशमसिं गृह्णाति.)

कालचंडः–(स्वगतम्) क्रुद्धेयं कालिकैव दृश्यते निःसंशयं हन्तुं शक्तैव द्वित्रान् पंचषान् वा पुरुषान् त्यक्तजीविताशेति प्रतिभाति। किमिदानीं कर्तव्यम्? (क्षणं विचार्य प्रकाशम्) नर्मदे नर्मदे! राजनियोगानुगे मयि नैवं रोष उचितस्ते यद्युपायांतरमेव पृच्छसि तर्ह्यस्त्येक एव गोमोक्षोपायो नान्यः।

नर्मदा–निवेद्यतां क उपायः?

कालचंडः–कथयिष्याम्यहं परं न त्वं स्वीकरिष्यसि.

नर्मदा–अवश्यमेव करिष्यामि निःशंकमुच्यताम्.

कालचंडः–( स्वगतम् ) अहो! पतिव्रतायाः प्रभावो येन नास्यां मनसापि पापं कर्तुं प्रभवाणि किं पुनर्वचसा वपुषा च ( प्रकाशम् ) नर्मदे! यदि मद्गृहे भोजनं करिष्यसि तर्हि गामिमां मोक्ष्यामि.।

नर्मदा–( स्वगतम् ) हा ! क्व ब्राह्मणकुले जन्म क्व च नीचनीचस्यास्याऽऽजन्मनोऽद्यावध्यसंख्यगोवधविधायिनो गृहे भोजनम् ? भवतु लोकमातेयं मे श्रेय एव करिष्यति ( प्रकाशम् ) भ्रातः कालचंड ! यद्येवमेव तवाग्रहस्तर्हि छिन्धि धेनुपाशान् चरतु च सा निर्भया यवसं पिबतु च पानीयम् । त्वद्गृहे भोक्तुमियमेषा स्थितास्मि.

कालचंडः–(सहर्षं गोपाशाँश्छित्वा तस्यै यवसं पानीयं चार्पयति).

कर्कशा–धिगूरे मूर्खाधिराज ! महामूल्यमणिमंडनानि परित्यज्य गृहक्षेत्रग्रामादीन् परित्यज्य सर्वस्वं च तत्पत्युः परित्यज्य किमेतद्याचितं ? कस्त एतावता लाभः? ( इतिवदंती पाणिपादप्रहारैस्ताडयति. )

गोपाः–काप्यद्भुतैव गोभक्तिरस्याः ।

गोप्यः–दुष्करमेतदुररीकृतं नर्मदया.

नंदाक्रूरौ–धिक्कालयवनराज्येधिकारिजनांध्यं येनैवं निरपराधापि प्रजा पीड्यते.

कालचंडः–मूर्खाधिराजपुत्रि ! त्वमेव मूर्खमूर्खा नाहम् । ब्राह्मणीयं स्वीयं धर्मं परित्यज्यास्मद्गृहे भोजनं करिष्यति सोयं मे परार्धपरिमितसुवर्णलाभतोऽप्यधिको लाभोस्तीति न त्वं वेत्सि येनैवं जल्पसि.

नर्मदा—कालचंड ! नाहमेवं रहसि त्वदन्नं भोक्ष्यामि । त्वदीय-किंकरद्वारा महाराजं कालयवनं निवेदय येन महाराज्ञो मच्छ्वश्रूश्वशुरौ मन्मातापितरौ सकुटुंबौ मदीयं प्राणनाथं दयाशंकरं पंडितांश्चान्यान् प्रख्यातान् सह नीत्वाऽत्रागच्छतु । पश्यत्सु तेषु सर्वेष्वहं त्वद्गृहपरिपक्कं भोक्ष्यामि.

कालचंडः—( सहर्षम् ) प्रियं नः प्रियं नः ( इत्युक्त्वा पत्रिकां लिखित्वा महाराजाय दातुं दूतकरेऽर्पयति. )

दूतः—( स्वगतम् ) मुक्त इदानीमहं महाकालीकरकलितकराल करवालव्यालमुखात् ( प्रकाशम् ) यथाज्ञा भर्तुः ( इत्युक्त्वा निष्क्रांतः )

अक्रूरः—अहो ! नर्मदाया धर्मशास्त्रेपि प्रावीण्यम्.

नंदः—एवमेव । गुप्ते हि पुण्यपापे अनुदिनमेधेते प्रख्यापिते च ते प्रतिक्षणं क्षयमुपयात इति विचार्यैव तया बहुजनसमक्षं त्वदन्नं भोक्ष्यामीत्युक्तम्.

गोप्यः—यशोदे ! न केवलमियं कमलकोमलांगी कोमलां सामोक्तिमेव वक्तुं कुशला । निग्रहेपि प्रवीणतरेति प्रतिभाति.

यशोदा—कोत्र संदेहः ? क्रोधात्कालीकरालतामुररीकृत्य करे करालः करवालो गृहीतोनया यदा तदा चक्षुषी

उन्मीलिते दुष्टस्य कालचंडस्य.

राधा—तस्या धैर्यं शौर्यं धर्मधुरंधरत्वं च वीक्ष्य परमेश्वरः करोतु तस्या अभ्युदयम्.

नेपथ्ये—जयति जयति महाराजः कालयवनः। ( सर्वे ससंभ्रमं पश्यंति. )

( ततः प्रविशति सकुटुंबेन शंभुशर्मणा शिवशर्मणा दयाशंकरेण शिष्टैश्चान्यैर्मंत्रिभिश्च सहितः कालयवनः ).

कालयवनः—( सिंहासनमधिरुह्य ) शंभुशर्मन्! शिवशर्मन्! दयाशंकर! मंत्रिणः! प्रधानाः! शिष्टाश्च इत इत उपविशतोपविशत.

सर्वे पौराः—यथाज्ञा महाराजस्य ( इत्युक्त्वोपविशंति)

कालचंडः—महाराज! महाराज! परमो मे भाग्योदयोयं येन मदंगणभूमिं महाराजः स्वपदपंक्त्या भूषयति.

कालयवनः—कालचंड! न यदमात्यैर्न सामंतैर्न मंत्रिभिर्न सेनापतिना न कोशाधिपतिना न पूर्वदक्षिणपश्चिमोत्तरादिग्भागाधिकारिभिश्चाद्यावधि कृतं तत्त्वयेदानीं निर्मितं यद् ब्राह्मणी स्वधर्मं परित्याजिता। ततः प्रियात्प्रियतरस्त्वं मे.

कालचंडः—सोऽयमनुग्रहस्ते।

कालयवनः—पुत्रि नर्मदे! ब्रूहि ते वक्तव्यम्.

नर्मदा-( उत्थाय ) अयि मान्या महाराजाः ! अयि पूज्यौ पितरौ सेव्यौ श्वशुरौ प्राणसर्वस्व प्राणनाथ ! सर्वे च पौरजानपदाः ! श्रूयतां मंदभाग्याया मे वृत्तांतम् । अद्य खलु गोत्रिरात्रव्रतसमाप्तिनिमित्तं तद्व्रतकारिण्यः सर्वा वयं गामिमां वनाय मोक्तुमासीमांतमनुयाताः । राजचत्वरमनुप्राप्तास्वस्मास्वकस्माद्राजसिंहः पंजरमुक्तः समापतत् । सिंहस्य शब्दश्रवणेनैव सर्वा मे स्वसारो गां विमुच्य पृथक् पृथक् प्रतोलीषु विलीना धेनुरप्येषा त्रासतरलितनेत्रा मद्धस्तगतां शृंखलां संछिद्य पलायिता । ततोहं च हृतसर्वस्वेव भयात्कंपाच्च तदीयां पदपंक्तिमनुसृत्येमां भूमिं यावदागता तावत्पाशबद्धां गां हंतुं चैनमुद्यतायुधं सानुचरं कालचंडमपश्यम् । दृष्ट्वैतन्मनसि मे यःदुखं यद्भयं यदौदास्यं यश्च विषादः समभून्न तद्वक्तुं शक्तास्मि । यथाकथंचिद्धैर्यं संधार्य प्राप्तं कालं प्रतिबोद्धुं प्रार्थितोयं कालचंडो नाभरणप्रदानेन न गृहग्रामक्षेत्रप्रदानेन न च मच्छ्वशुरसर्वस्वप्रदानेन न मत्पितृसर्वस्वप्रदानेन न मत्प्राणप्रदानेन न चास्य मे बालकस्यापि प्राणप्रदानेन गोवधान्निवृत्तस्ततः करालमिमं करवालं गृहीत्वा " कालचंड ! कोप्यस्ति धेनोरस्या मोक्षोपायो यदि तर्हि ब्रूहि । न चेत्त्वां त्वदीयांश्चाहं त्वदीयेनैव करवालेन हंतुं सन्नद्धपरिकरास्मि

प्रणष्टप्राणायां च मयि यद्भावि तद्भवतु" इत्युक्ते तेनोक्तं "यदि मद्गृहे भोजनं करिष्यसि चेद् गामिमां मोक्ष्याम्यन्यथा केनापि प्रकारेण न मोक्ष्यामि" इति । ततोऽस्याः कामधेनोः प्राणत्राणाय तदीयमन्नं भोक्ष्यामीति विदितं भवतु सर्वेषां युष्माकम्.

सर्वे–( नेत्रेभ्योऽश्रूणि मुञ्चन्तः ) धन्यासि पुत्रि! धन्यासि.

कालयवनः–पुत्रि! ब्राह्मणधर्मं परित्यज्यास्यान्नं भुक्तवतीं त्वामौरसपुत्रीनिर्विशेषं पालयिष्यामि लालयिष्यामि पोषयिष्यामि च.

नर्मदा--नैतदर्थं प्रयासोयं मे.

नंदः–धिक्कालयवनं यो नर्मदाया ईदृशीं गोभक्तिं विलोक्य "तुष्टोहमाज्ञापयामि त्वदीयान्नभोजनमंतरापि मुच्यतां गौः" इति मृदुमंजुलोक्तिरसज्ञां रसज्ञां न कुरुते.

अक्रूरः–यद्येवं ब्रूयाच्चेत्किं तस्य कालयवनत्वम्?

राधा–( स्वगतम् ) धन्या खलु नर्मदा या गोप्राणत्राणायाकृत्यमपि कृत्यमिव कर्तुं हर्षात्प्रवर्तते.

कालयवनः–कालचंड! त्वरस्वानय भक्ष्यं भोज्यं च.

कालचंडः–यथाज्ञा महाराजस्य । गत एव किंकरो महानसे तदाहर्तुम्.

नर्मदा–श्वशुरौ पितरौ च न मया युष्माकं पूजा कृता न भक्तिः कृता बालभावाच्च प्रत्युत युष्मदाज्ञोल्लंघनमेव मुहुर्मुहुः कृतं तत्क्षंतव्यम्। एते मे चरमाः प्रणामाः।

शंभुशर्मशिवशर्माणौ–(सास्रं) पुत्रि! मा शोकं कुरु। कृतं सर्वं त्वया गोप्राणत्राणमाचरंत्या कुलीनकामिनीकृत्यम्.

नर्मदा–(मातरं श्वश्रूं च प्रति) मातरौ! बालकोयं युवाभ्यामतः परं पालनीयः पोषणीयश्च.

श्वश्रूमातरौ–पुत्रि! मा चिंतां कुरु। बालकोयं नौ बहिश्चराः प्राणाः किंचेयमप्रतिमा गोभक्तिस्ते तस्य सर्वदा कुशलं करिष्यति.

नर्मदा–प्राणनाथ! एषा मे चरमा प्रणतिः। गर्भवत्याःश्रीकामदुघायाः प्राणत्राणकृतेऽकृत्यमपि कृत्यमिवाचरंती भवदीयपदपद्मपरिचर्यायामयोग्यतां गमिष्यामि तथापि न मानसं मे त्वच्चरणयुगलं स्वप्नेपि विस्मरिष्यति। जन्मांतरेपि तवैव सहधर्मचारिणी भविष्यामि।

दयाशंकरः–प्रियतमे! त्वया तु श्रीगोदेवीप्राणत्राणमाचरंत्या समुद्धृतं कुलद्वयं कृतं च सर्वं कुलीनकांताकृत्यं तादृग्सृज्यतामौदासीन्यं श्रीकामदुघैवेयं ते मनोऽभिलाषान् पूरयिष्यति.

(ततः प्रविशति वस्त्रच्छन्नं भोजनपात्रं गृहीत्वा किंकरः)

किंकरः—महाराज! भोजनमेतत्.

कालयवनः—स्थापयैतत्पीठोपरि.

किंकरः—यथाज्ञा देवस्य ( इति पीठकोपरि भोजनपात्रं स्थापयति. )

नर्मदा—( स्वगतम् ) हा ! किं कर्तव्यमिदानीमथवा कामदुघैवेयं धर्मं मे रक्षिष्यति. ( प्रकाशम् )

यदि कामदुघेऽसि पूजिता भगवत्प्रीतिसकामया मया ।
कुरु तर्हि तथा यथा वृथा न भवेज्जन्म च जीवितं च मे ॥

( इति गां प्रणम्य ) पौरा जानपदाश्च गोप्राणसंरक्षणाय न सर्वस्वत्यागो न प्राणत्यागोपि गणनीय इति विचार्य सर्वेषां युष्माकं समक्षमहं स्वधर्मं परित्यज्यैतदन्नमुपयोक्तुमीहे.

पौराः—पुत्रि ! न त्वया स्वधर्मस्त्यज्यते किंतु स्वधर्मः संरक्ष्यत एव तेन मोदामहे.

नर्मदा—

अभक्ष्यमपि मे भक्ष्यं यदि गौ रक्ष्यतेमुना ।
तद्भक्ष्यमपि मेऽभक्ष्यं येन गौर्नैव रक्ष्यते ॥

( इत्युक्त्वाभोजनभाजनवस्त्रमपाकरोति. )

पौराः—

द्राक्षाम्रजंबूकदलीफलाढ्यं यद्भाजनं वीक्ष्यतएवमेतत् ।

सपानपात्राणि च दुग्धपूर्णान्यहो ! किमप्यद्भुतत्वाद्भिभाति॥

( इति वदन्तः साश्चर्याः पश्यन्ति. )

कालचंडः—( विलोक्य सक्रोधं ) मूढमूढ ! किमेतदानीतम् ?

किंकरः—यदाज्ञप्तं भवता तदेवानीतम्। मांसोदनपूर्णं भोजनभाजनं सुरापूर्णानि च पानपात्राणि.

कालचंडः—अंध ! पश्य पश्य क्वास्ति मांसोदनं सुरापात्राणि च.

किंकरः—( विलोक्य ) आश्चर्यमेतत्कर्कशयैव मह्यमेतद्दत्तं किं पुनरेतज्जातम्.

कालचंडः—( क्रोधात् ) धूर्त ! मा मृषाभाषणं कुरु। पक्षपातस्त्वया नर्मदायाः कृतस्तन्न जीविष्यसि ( इति पादप्रहारं कुरुते. )

कालयवनः—कालचंड ! अलं व्यतीतविचारेण द्वितीयं पात्रमानीयताम्.

कालचंडः—कर्कशे ! त्वमेव महानसान्मांसोदनं पानपात्राणि च मदिरापूर्णान्यानय.

कर्कशा—यथाज्ञा भर्तुः ( इत्युक्त्वा भोजनपात्रमानीय नर्मदाया अग्रे स्थापयति. )

नर्मदा—" यदि कामदुघेसि पूजिते " ( इति पुनः पठित्वा पात्रवस्त्रमपाकुरुते तावत्पात्रं फलैः पूर्णं पानपात्राणि च क्षीरपू-

र्णानि भवंति. )

कालचंडः—( कोपात् ) पापे पापे ! कर्कशे ! कर्कशेव त्वं या नर्मदायाः पक्षपातात्पत्युरपि मे वचनं न कुरुषे । तदद्य न भविष्यसि. ( इत्युक्त्वा दंडेन प्रहरति. )

कर्कशा—पाप पाप ! किं निरपराधामपि मां प्रहरसि? त्वमप्यद्य न भविष्यसि ( इति वदंती प्रतिप्रहारं कुरुते. )

कालयवनः—कालचंड ! मा कस्यापि विश्वासं कुरु । त्वमेव महानसान्मांसोदनसुरापात्राणि चानय निरावरणं च तत्पात्रं नर्मदाया अर्पय.

कालचंडः—यथाज्ञा देवस्य ( इत्युक्त्वा मांसोदनपात्रं सुरापात्राणि चानीय सर्वेभ्यो दर्शयति. )

कालयवनः—( व्याधहस्तात्स्वयं गृहीत्वा ) पुत्रि नर्मदे ! एहि गृहाणैतत्.

नर्मदा—यथाज्ञा प्रजापितुर्महाराजस्य ( इत्युक्त्वा ) "अयि कामदुघेसि पूजिता" ( इति प्रकाशं पठंती पात्रमादातुं गच्छति. )

कालयवनः—( साश्चर्यम् ) अहो ! किमिदं यथायथा नर्मदा मन्निकटमायाति तथातथा.

फलतामुपयाति मांसमप्यखिलं मद्यमिदं च दुग्धताम् ।

अपराधलवो न किंकरेस्त्वपराधिन्यपि नास्ति कर्कशा॥
कोप्ययं नर्मदाया एव प्रभावः ( इत्युक्त्वा नर्मदां प्रणमति. )

कालचंडः—नर्मदे ! नैव गां मोक्ष्यामि यत्त्वं भोजनं करिष्यामीति प्रतिज्ञाय इंद्रजालं कुरुषे येन मांसमपि फलायते मद्यमपि दुग्धायते । तत्पश्यंत्या एव ते गां हन्मि ( इत्युक्त्वा खड्गं गृह्णाति. )

नर्मदा—( कालचंडस्य करं गृहीत्वा ) अये मूढ हृदयहीन ! पश्यन्नप्यंधतां कथं वहसि? नैतदिंद्रजालम् । अस्या एव कामदुघाया एषः प्रभावः । या मद्धर्मरक्षणाय मत्प्रार्थनया मांसं फलं कुरुते मद्यं दुग्धं कुरुते सा मत्प्रार्थनया सिंहशरीरं धृत्वा युष्मान् सर्वान् भक्षयितुमपि शक्ता परं सर्वभूतदयार्द्रहृदयाहं न तथा कर्तुमीहे । ईदृक्प्रभावानामपि कामदुघानां पालनं पोषणं लालनं च न विधाय तासां हननं विधीयते भवता । कस्त्वादृशः पापी कस्त्वादृशः क्रूरः कस्त्वादृशश्च कृतघ्नः । धिक् ते बुद्धिं धिक् ते जन्म धिक् ते जीवितं च । मूढ ! चिंतय चिरं चेतसा येयं गौर्हतापि त्वया ते वृत्तिं समर्पयति सा पालिता पोषिता लालिता च न किं ते वृत्तिं समर्पयिष्यति ? यदि नाधुनापि मद्वचसि विश्वासस्तर्हि प्रत्यक्षमनुभूतेप्यस्याः प्रभावे कथं मूढतामुद्वहसि ? दुर्लभतमं मानुष्यं जन्म संप्राप्य

किं त्वया सुकृतं कृतं ? हा ! निरर्थं जन्म जीवितं च ते ।
तदतः परमपि किमप्यात्महितं विचारय विचारय !

कालचंडः—( स्वगतम् ) सत्यमेवेयं वदति निष्फलमेव मे जन्म जीवितं च पापैः कर्मभिः कृतम् । तदलमिदानीं तादृशैरकृत्यैः कृत्यैः ( प्रकाशम् ) मातर्नर्मदे ! नर्मदे !

त्वं मे गुरुस्त्वमसि मे परदैवतं त्वं ।
मातासि मे त्वमसि मे च पिता त्वमेव ॥
सर्वस्वमप्यसि ततः प्रणमामि तुभ्यं ।
जन्मांधताद्य गलिता मम ते वचोभिः ॥
पाशाः प्रयांतु विलयं सकला ममामी ।
भस्मीभवंतु सकलानि ममायुधानि ॥
शिष्योस्मि ते तत इहानुदिनं करिष्ये ।
गोसेवनं प्रणयतः किल यावदायुः ॥

( इत्युक्त्वा पादयोः पतति. )

नर्मदा—यद्येवं तर्हि भाविनी ते श्रेयःपरंपरा ।

कालयवनः—( सिंहासनात्समुत्थाय. )

हेनर्मदेऽखिलसतीकुलमौलिरत्न ।
त्वां गामिमां च मुहुरादरतो नमामः ॥
नातः परं तु मम कोप्यखिलेपि देशे ।

गां हंतुमुद्यतकरो भविता मनुष्यः ॥

नर्मदा—महाराजाधिराज ! इदानीं परमाभ्युदयवृद्धिर्भवित्री ते.

नंदाक्रूरौ—फलिता पुत्र्या नर्मदाया गोभक्तिकल्पलता.

गोप्यः—दिष्ट्या वर्द्धसे देवि नर्मदे !

गोपाः—किं गोभक्तिस्तादृशी कदापि निष्फला भवति ?

नर्मदा—( श्वश्रूश्वशुरौ मातापितरौ च प्रणमति. )

श्वशुरौ पितरौ च—(सास्रम्) वत्से ! निःसीमतरां सौभाग्यपरंपरामनुभूयाः ।

कालयवनः—वत्से नर्मदे ! गामिमां गृहीत्वा विविधवाद्यगीतैः संभूषयस्व भुवनम् । वयमपि सर्वे यावत्त्वदीयभवनांगणमनुयास्यामः ।

नर्मदा—महाराज ! अलमलमत्युपचारेण पुत्रिकायां मयि । यदि तादृशी मयि प्रीतिर्महाराजस्य तर्हि.

ग्रामे पुरेपि नगरेपि च कोपि देशे
गां पीडयेन्न मनसा वचसा क्रियाभिः ।
राजंस्त्वदीय इति घोषय डिंडिमेन
त्वं चेन्मदीयहितमिच्छसि कर्तुमद्य ॥

कालयवनः—पुत्रि ! यथात्वदीयेच्छं दुंदुभिस्वनेन घोषयिष्यामि । किंचेदृशपरमपवित्रचरित्रावलोकनसंतुष्टो ग्रामशतं पुत्री-

धिया पारितोषिकमर्पयामि। अयि मंत्रिणः प्रधानाः! पौरा जानपदाश्च सर्वे गीतवादित्रघोषेण गोसहितां पुत्रीं तद्गृहं प्रापयत.

पौरा जानपदा मंत्रिणः प्रधानाश्च—यथाज्ञा महाराजस्य!

कालचंडः—आर्ये नर्मदे! सदुपदेशस्यानृण्यं तु सुवर्णपूर्णार्णवमेखलावलयेनापि न कर्तुं शक्यं तथापि मन्मनःसंतोषायेमां स्वीकरिष्यसीत्याशासे ( इत्युक्त्वा रत्नावलीं पादयोरर्पयति. )

नर्मदा—भद्रमुख! नेयं मे प्रीतिकरी। तत इयमिमेलंकाराश्च मया त्वत्पुत्रायार्प्यंते। मत्प्रीतिजनकं किमस्तीति जानास्येव तादृशं चेदर्पयिष्यसि तर्हि द्वाभ्यां पाणिभ्यां प्रतिग्रहीष्यामि.

कालचंडः—( क्षणं विचार्य ) मातर्नर्मदे! इतः प्रभृति परित्यज्यते मयेयं नीचनीचवृत्तिस्तेन मद्वंशजा अपि सर्वे गोसेवामेवाश्रयिष्यंतीति प्रतिज्ञा मे.

नर्मदा—( सहर्षाश्रुपातम् ) भद्रमुख! रत्नावलीनियुतमिदं मह्यं त्वया समर्पितमिति मन्येहम्.

( नेपथ्ये गीतध्वनिं वाद्यध्वनिं श्रुत्वा सानंदं सर्वेप्युत्तिष्ठंति )

नर्मदा—भवंतु सर्वेषां पराः श्रेयःपरंपराः (इत्युक्त्वानिष्क्रांता.)

कालयवनः—गता देवी नर्मदाहमपि तदाज्ञानुसारेण डिंडिमेन घोषयामि ( इत्युक्त्वा निष्क्रांतः )

श्रीकृष्णः—( सिंहासनादुत्थाय ) पितरौ ! गोपाः ! गोप्यश्च ब्राह्मणपुत्र्यापि नर्मदया एकस्या गो रक्षणाय किं कृतं तद्दृष्टं भवद्भिः? सांप्रतं पापेन कंसेनान्यायेनार्जितानां-निधनाय निबद्धानां च गवामयुतस्य रक्षणाय गंतव्यं न वेति भवद्भिरेव वक्तव्यम्.

यशोदानंदौ—गोरक्षणाय गंतव्यं वत्स ! वत्सेन सत्वरम्।
श्रीगोरक्षैव ते रक्षां करिष्यति न संशयः ॥

श्रीकृष्णः—महाननुग्रहोयम्.

गोप्यः—

हेश्रीकृष्ण त्वमसि भगवन् प्राणतोऽपि प्रियो न-।
स्त्वद्विश्लेषः क्षणपरिमितोप्युग्रदुःखप्रदो नः ॥
सत्यप्येवं व्रज कुरु गवां रक्षणं चेति वच्मः ।
श्रीगोरक्षा भवतु भवतो रक्षणे जागरूका ॥

श्रीकृष्णः—गोभक्तिधुरंधरतामुद्वहंतीनां भवतीनामेवमेवे-दानीं वक्तुं शोभते !

गोपाः—

हेसन्मित्रशिरोमणेऽखिलजगद्गोपालचिंतामणे ।
चेतश्चंदन नंदनंदन गवां रक्षा विधेया द्रुतम् ॥
गत्वा तत्र सखे,त्वया सह वयं सर्वे च शूरा अमी ।

आयास्यंति भवद्वियोगजमहादुःखं न सोढुंक्षमाः नैतावदेव गवां रक्षणलक्षणस्वधर्मसंरक्षणार्थमपि ते त्वया सहागंतुमीहंते वयमपि चेहामहे.

श्रीकृष्णः–(सपरितोषम्) प्रियं नः प्रियं नः। श्रीदामन्! प्रभातप्राया रजनी तातपुरःसरान् वृद्धान् शकटस्थान् पुरस्कृत्य यात यूयं मथुरां वयमपि रथेन द्रुतमेवागमिष्यामः।

यशोदानंदौ–वत्सा अप्सरसः परमं परितोषमाप्तानि मनांसि नश्चमत्कारसारशालिना भवतीभिराभिनीतेनानेन प्रेक्षणकेन ( इत्युक्त्वा ताभ्यः पारितोषिकमर्पयतः ) ( अप्सरसः सप्रणामं गृहीत्वा निष्क्रांताः )

गोप्यः–अयि प्राणसर्वस्व! पुनरविलंबेन दर्शनदानानुग्रहं करिष्यसीति प्रार्थना नः ( इत्युक्त्वा निष्क्रांताः )

श्रीदामा–आर्याः सज्जानि शकटानि तत्सत्वरमारोहतारोहत.

नंदादयः–सन्मित्राक्रूर! वत्सौ बलभद्रश्रीकृष्णचंद्रौ! गम्यतेऽस्माभिः ( इति निष्क्रांताः )

श्रीकृष्णबलभद्रौ–मातः! प्रयाणप्रणाम एष नौ ( इति यशोदां प्रणमतः )

यशोदा–(सास्रम्) वत्सौ! शिवाः संतु युवयोः पंथानः।

श्रीकृष्णबलभद्रौ–मातरत्रभवत्या भवत्या एष आशीर्वाद एव रक्षामणिर्नः ( इत्युक्त्वा निष्क्रांतौ. )

अक्रूरः–मातर्यशोदे ! पुत्रनिर्विशेषस्य तेऽक्रूरस्यायं प्रयाणप्रणामः ।

यशोदा–वत्स ! कुशलमनुपथमनुभूयास्त्वदाधीनमिदानीमनयोर्वत्सयोः कुशलम् ( इतिवदंत्यश्रूणि मुंचति. )

अक्रूरः–मातर्जगद्रक्षादीक्षितयोरेतयोर्न काचिच्चित्ते चिंता विधेया ( इत्युक्त्वा निष्क्रांतः )

यशोदा–रोहिणि ! गतौ रथस्थौ वत्सौ साक्रूरौ न रथो न तद्ध्वजो न तद्रजश्चापि दृश्यते । तदेहि तयोर्मंगलाय श्रीसर्वमंगलाधीश्वरमेव तन्मंदिरे स्थित्वा प्रार्थयावहे ।

रोहिणी–यथाह प्रियसखी । एहि श्रीमहेश्वरमंदिरं यावः ( इति निष्क्रांते. )

इति श्रीमत्केशवकृपाकल्पवल्लरीपल्लवायमाने गोपालचिंतामणिविजयनाम्नि नाटके षष्ठोऽङ्कः ।

परमशिवपरात्मश्रीमहेशात्मजन्मा ।
विबुधवरगुरुश्रीकेशवार्यैकशिष्यः ॥
नयविनयमयात्मश्रीजटाशंभुमित्रं ।
स्वकृतिकुसुममालां श्रीशिवायार्पयामि ॥

## ॥ अथ सप्तमोऽङ्कः ॥

( ततः प्रविशति सोद्वेगः कंसश्चाणूरश्च. )

चाणूरः–महाराज ! को निदेशो देवस्य ?

कंसः–सखे ! श्रुतं मया मथुराया आगतेन वसुदेवपुत्रेण विनापराधं राजकीयो रजको व्यापादित इति.

चाणूरः–श्रुतं मयाप्येतत् । ततस्ततः ?

कंसः–धनुर्यागस्थलं प्रविश्य तालत्रयपरिमितौन्नत्यं धनुरपि लीलया द्विधा कृतम् ।

चाणूरः–(सखेदम्) बह्वेतद्बालचापलं तेन कृतम् । ततस्ततः ?

कंसः–ततस्तदीयान् रक्षकान् मत्प्रेषितानपरांश्च सहस्रशो योधान् मुहूर्तमात्रेण धनुःशकलमात्रेणायुधेन बलभद्रकृष्णचन्द्रौ जघ्नतुः । श्रुत्वैवैतन्नैति निद्रा माम् ।

चाणूरः–निःशृंखलमेतत्तयोर्बालचापलं तावेवनिःसीमानुतापपात्रतामनुभविष्यतः । ततस्ततः ?

कंसः–ततश्च श्वः प्रभाते नागायुतबलेन कुवलयापीडेन तौ घातयिष्यामि । यदि कदाचित्ततोपि मुक्तौ भवेतां तौ तदा भवद्भिरप्रतिमल्लैर्मल्लैर्मल्लयुद्धेन हंतव्यावित्ति मे

निदेशः ।

चाणूरः—( स्वगतम् ) हा ! प्राप्तः कालः (प्रकाशम्) महाराज ! नैतद्विषये चिंता विधेया हतावेव ताववेहि ( इत्युक्त्वा निष्क्रांतः )

कंसः—गतश्चाणूरस्तदहमपि शयनाय शयनागारमुपैमि ( इत्युक्त्वा निष्क्रांतः )

( ततः प्रविशति नंदो रामकृष्णौ च )

नंदः—वत्सौ ! युवाभ्यामद्य महाराजस्य समीपे नागंतव्यम् ।

रामकृष्णौ—कुतो नागंतव्यम् ?

नंदः—श्रुतं मया कुवलयापीडो नाम मदोन्मत्तो हस्ती सज्जीकृतोस्ति युवां निहंतुम् । वज्रसाराश्चाप्रतिमल्ला मल्लाअपि युवां हंतुं सज्जाः संतीति.

रामकृष्णौ—आर्याः ! तर्हि युष्माभिः पूर्वं गंतव्यं वयं च पश्चादागमिष्यामः ।

नंदः—पश्चादपि नागंतव्यमिति मेऽभ्यर्थना.

रामकृष्णौ—तातपादाः ! आवयोरागमनं विना कथमित्र गवामयुतं दुःखमुक्तं भविष्यतीति विचिंत्यम् ।

किंच—

गोभक्तिराजनुरिहास्ति विनिर्मिता चे- ।

तत्किं नौ करिष्यति करी मदिरामदांधः ॥
मल्ला अपि प्रबलबाहुबलावलेपा- ।
रक्षामणिर्जयति नः किल धेनुरक्षा ॥

नंदः-यद्यपि वत्सौ ! युवाभ्यामाबाल्यात्प्राणनिर्विशेषं परिशीलिता गोरक्षा रक्षामणिर्जागर्त्यैत्र तथापि न मे मनो धैर्यस्थैर्यमुपैति.

( इत्युक्त्वाऽश्रूणि मुञ्चति. )

श्रीकृष्णः-तात ! तात ! किमेतत् ? धैर्यधीनिधयो यूयमपि धैर्यं परिहरिष्यथ तर्हि बाला वयं कथं धैर्यं धारयिष्यामः? ततः श्रीमद्भिस्तु धैर्यं संधार्य बालेभ्योऽस्माभ्यं धैर्यमर्पणीयम् । शृणुत मे मतम् ।

मातरं पितरं प्राणप्रियानपि च सोदरान् ।
प्राणांश्च धेनुरक्षार्थं त्यजतो नास्ति मे भयम् ॥

नंदः-वत्स ! धन्योसि खलु धन्योसि ।

बलभद्रः-अयि तातपादाः !

गोरक्षाभ्युदयार्थं तृणमिव जीर्णं हि जीवितं मन्ये
अन्येषां तु कथा का ये सति बत जीवने सुखाय स्युः

नंदः-वत्स ! युक्तैवेयमुक्तिः श्रीकृष्णस्य ज्येष्ठभ्रातुस्ते तथापि.

क युवां कमलातिकोमलौ ।
क च नागायुतसारवान् करी ॥
इति मोहमुपैति मानसं ।
न च धैर्यं वहतीह किं ब्रुवे ॥

( इति वदन् मूर्छया पतति. )

रामकृष्णौ-तातचरणाः ! समाश्वसित समाश्वसित ( इति वदंतौ पटांचलेन वीजयतः )

नंदः-( क्षणात्संज्ञामुपलभ्य ) वत्सौ !

धनं धान्यं च राज्यं च यशोदामपि मामपि।
गवां प्रतिनिधित्वेन हंतु राजेति मेऽर्थना ॥

( इति वदन् पुनर्मूर्छति )

श्रीकृष्णः-आर्य ! अतिभूमिं गतो वत्सलभावः पीडयति तातम् । किं कर्तव्यमिदानीम् ?

बलभद्रः-कृष्ण ! कृष्ण ! मा चिंतां कुरु । तातोऽक्रूर एवात्राऽऽहूयतां स एवैनमाश्वासयिष्यति.

श्रीकृष्णः-श्रीदामन् ! गच्छार्यमक्रूरमाह्वय.

श्रीदामा-यथाज्ञा प्रियवयस्यस्य ( इति द्रुतं गच्छति. )

नंदः-( प्रतिबुध्य ) हा प्रियमित्र ! अक्रूर ! किमेतत्त्वयाऽत्रास्मानानयता कृतम् ? ( इति प्रलपति ).

(ततः प्रविशति श्रीदाम्नाऽनुगतोऽक्रूरः)

अक्रूरः–(ससंभ्रमम्) कथमयं धैर्यसागरोपि शुष्यति?

श्रीकृष्णः–आर्याः! वात्सल्यस्यैवायं प्रभावः।

अक्रूरः–अपि आर्याः! समाश्वसित समाश्वसित.

नंदः–(नेत्रे समुन्मील्य) अहो प्रियमित्रं मेऽक्रूर आगतः?

(धनं धान्यं च राज्यं चेति पुनः पठति.)

अक्रूरः–आर्याश्चित्तं समाधाय श्रूयतां वचो मे.

नंदः–एष समाहितचित्तोऽस्मि.

अक्रूरः–युवयोर्दंपत्योरेकपुत्रं श्रीकृष्णं रोहिणीवसुदेवयोरेकपुत्रं च बलभद्रं रथेनात्रानयतो ममापि मनसि युष्माकमिव जाता चिंता तत्रापि प्रयाणाऽवसरे श्रीयशोदारोहिण्योर्व्रजविलासिनीनां च तां तां दशां विलोक्य हंतु नाम रोषाविष्टः कंसः सकलत्रपुत्रमित्रपरिवारं मां न पुनरेतौ कमलदलकोमलांगावंधयोर्नयनायमानावधनयोर्धनायमानौ नृशंसस्य कंसस्य समीपमुपनेयौ। न नेष्यामि चेदग्रे गतानां नंदादीनां का दशा भवित्री? गवामयुतस्य च गोपालचिंतामणिमेनमंतरा कः पालनं करिष्यतीतिविचारविचरच्चेतस्कतया यथाकथंचित् प्राप्तोहं मध्याह्ने श्रीयमुनातीरम्।

नंदः—युज्यते चिंतानिमग्नस्यैवं मंदा गतिः । ततस्ततः ?

अक्रूरः—ततश्च यद्भवतु तद्भवतु । अत्र मध्यान्हसंध्यामुपास्य श्रीरामकृष्णौ तु पुनर्गोकुलमेव नेयौ । मथुरां गत्वा सकुटुंबेन मया वसुदेवेन नंदाद्यैर्गोपैश्च गोशालागोपुराग्रे स्थित्वा स्वप्राणैर्गोप्राणा रक्षणीया इति निश्चितम्.

नंदः—अक्रूर ! अक्रूर ! धन्योसि सम्यग्विचारः कृतः । ततस्ततः ?

अक्रूरः—ततो वत्सौ युवाभ्यां रथ एव स्थेयमहं संध्यामुपास्य त्वरितमागमिष्यामीत्युक्तावेतौ " आर्या ! युष्मदाज्ञया रथ एव स्थास्यावो न रथादवतरिष्यावो निश्चिततया संध्या देवी समुपास्यताम् " इत्यूचतुः ।

नंदः—युक्तमुक्तं ताभ्याम् । ततस्ततः ?

अक्रूरः—ततश्च श्रीयमुनायां निमग्नोहं उभावप्येतौ सवस्त्रौ सालंकारावंतर्जलेऽपश्यम्.

नंदः—बालबुद्धिरेषा तयोः । ततस्ततः ?

अक्रूरः—दृष्ट्वा च बलवती बालभावसुलभा चपलतेति विचिंत्य झटित्युन्मज्य रथचिंतया रथ एव चक्षुराक्षिपं यावत्तावद्यथापूर्वमेव रथे स्थितावेनावद्राक्षम्.

नंदः—( स्वगतम् ) इदमाश्चर्यम् । ( प्रकाशम् ) ततस्ततः ?

अक्रूरः—भ्रांतिरेव ममोपालंभपात्रं कथं विनयसंपन्नशिरोमणी एतावदविनयलेशमपि कर्तुमुत्सहेयाताम् इति मनसि निश्चित्य पुनरघमर्षणाय श्रीयमुनाजले निमग्नोऽहं यावत्तावत्तत्रैवांतर्जले भगवंतं शेषशायिनं सपरिवारमपश्यम्.

नंदः—मित्रमणे ? रामकृष्णदर्शनं तु रामकृष्णाकारदृष्टितया ते संभवति परं भगवतः शेषशायिनो दर्शनं त्वतर्कितमेव ते संपन्नम् । चित्रमेतत् । ततस्ततः ?

अक्रूरः—ततः सरोमांचप्रपंचेन हर्षाश्रुवर्षान्वितलोचनयुगलेन मया सप्रणयं सांजलिबंधं यथाबुद्धिबलं कृतस्तुतिः स्तुतिश्रवणसंतुष्ट इव सपरिवारो भगवानंतर्हितः । अहं च परिसमाप्य मध्याह्नकृत्यं श्रीरामकृष्णाधिष्ठितं रथमगच्छम् ।

नंदः—अहो ! भाग्यशालिता प्रियमित्रस्य मे । ततस्ततः ?

अक्रूरः—ततश्च रथारूढोहमभिज्ञाभ्यामिवैताभ्यां 'आर्याः ! एतावता विलंबेनार्यैर्व्रियति भूमौ जले च किमप्यद्भुतं साक्षात्कृतमिति मनो नौ शङ्कते' इतिपृष्टोऽहं 'सर्वाद्भुतसागरौ युवां दृष्टवता मया किमिवाद्भुतं न दृष्टम्' इत्युक्त्वा मनोवेगेन रथेन मथुरामेवागच्छम् ।

नंदः-तेन कस्ते निश्चयः ?

अक्रूरः-श्रूयतां मे निश्चयः ।

साक्षान्नारायणं कृष्णमवेहि त्वमसंशयम् ॥
शेषं चसाक्षाद्रामाख्यमवतीर्णं निजेच्छया ॥

ततो न गजशतान्न मल्लसहस्रान्न कंसानियुताद्वा बालयोरेतयोस्ते भयमस्तीति निश्चित्य वयोवृद्धगोपगणपरिवृतस्त्वं मया सहैव राजद्वारमेहि एतौ च वयस्यैर्गोपैः सह पश्चादागच्छतामिति मतम्.

नंदः-प्रियमित्र ! यथार्थैवेयमुक्तिस्ते। मयाप्यनुभूतस्तदीयः कश्चिद्दिव्यः प्रभावः पश्चिमदिगीशसदनान्निवृत्तेन वयोवृद्धैर्गोपैः सह श्रीगोलोकं साक्षात्कृतवता तदिदानीं स्मृतिमुपयातम् । तदेहि निश्चितचित्ता गच्छामः (इत्युक्त्वा नंदोऽक्रूरेण गोपैश्च वृद्धैः सह निष्क्रांतः)

बलभद्रः-भद्रमुख ! तात आर्येणाक्रूरेण वृद्धैश्च गोपैःसह गतः । तदतः परं किमस्ति कर्तव्यम् ?

श्रीकृष्णः-आर्याः ! श्रीगोपेश्वरदर्शनपूजनमंतरा न मे चेतसः शांतिस्तत्कुत्रापि श्रीपार्वतीप्राणनाथस्य दर्शनं पूजां च विधायानंतरं कर्तव्यं करिष्यामः ।

बलभद्रः-वत्स ! श्रुतं मयाऽत्राप्यस्ति निकट एव श्रीया-

देवकुलेश्वराख्यस्य श्रीपार्वतीहृदयदयितस्य मंदिरमिति

श्रीकृष्णः—यद्येवं तर्हि तत्र गत्वा संपूज्य परमकृपालुं परमेश्वरं तदनंतरं राजसमीपं गमिष्यामः।

बलभद्रः—वत्स ! प्रियं मे प्रियं मे एहि गच्छामः ( इत्युक्त्वा श्रीरामकृष्णौ सवयोभिर्गोपैःसह निष्क्रांतौ ).

( ततः प्रविशति कारागारस्थितौ देवकीवसुदेवौ सक्रोधः कंसश्च ).

वसुदेवः—देवकि ! रामकृष्णौ नंदादिभिः सहात्रागतौ धनुश्च ताभ्यां भग्नमिति मया स्वप्ने दृष्टम्।

देवकी—नाथ !

कमलांतरकोमलांगकांतौ।
क्व सुतौ तौ क्व धनुश्च वज्रकल्पम्॥
कथमेव हि संभवेच्छिरीष-।
प्रसवाग्रेण तु खंडनं शिलायाः॥

तत्स्वप्नेन विप्रलब्धं स्वांतं वः।

वसुदेवः—भवतु श्रीगोरक्षैव नः श्रेयसे भविष्यति।

नेपथ्ये—रे ! रे ! मंदमते ! नाद्यापि ते गोरक्षायां श्रद्धाशैथिल्यं ? विचारय विचारय किं ते गोरक्षया श्रेय आचरितमिति.

वसुदेवः–कंसस्येव स्वरः श्रूयते.

देवकी–( सभयम् ) हा ! किमतःपरं भविष्यति ?

वसुदेवः–मा चिंतां कुरु भगवती कामदुघैवास्ति नः शरणम् ।

कंसः–( प्रविश्य ) वसुदेव ! वसुदेव ! महापराधपरंपराकारिण्यपि त्वयि संबंधनैकट्यात्स्निह्यति हृदयं मे । तच्चरमं मे वचनं शृणु.

वसुदेवः–( उत्थाय ) अहो महाराजः ? इत इत आस्यताम् ( इत्यासनं समर्पयति ).

कंसः–(आसने समुपविश्य) वसुदेव ! गताःषड्भिः पुत्रैः सहैका पुत्री यावज्जीवमनुभूतं ज्ञातिसंबंधिबांधवावियोगदुःखदुःसहं कारागारकुटुंबित्वं वलितं वपुः पलितं शिरो गलितं च मुखाद्दंतजालं तथापि दुराग्रहं न दूरीकुरुषे कीदृशीयं ते मूर्खता ?

वसुदेवः–महाराज ! तव पादप्रसादेषा मे मूर्खतापि श्रेयस्करी.

कंसः–अश्रेयस्करीति वक्तव्यम् । नंदगृहे न्यासीकृतौ ते तनयौ रामकृष्णावत्र गतेऽह्न सायं समागतौ याभ्यां मदीयेष्टदैवतस्य शिवस्य धनुर्भग्नम् । धनुषो रक्षकाश्चानेके

निहताः । ईदृशं महापराधमपि न प्रगणय्य प्रार्थयामि त्वदीयां धेनुं मह्यमर्पयेति येन सकलदुःखमुक्तः सुखपरंपरामनुभविष्यसि.

वसुदेवः—न हि सप्राणे मयि सप्राणायां देवक्यां च तद्भविष्यति। गोरक्षातः प्राप्ता दुःखपरंपरापि मे सुखपरंपरैव.

कंसः—(सरोषम्) कोऽस्ति भोः? समानय मुसलं येन दुष्टयोरनयोः शिरसी विभिद्य गां हरिष्यामि.

दुर्मुखः—( प्रविश्य ) देव ! गृह्यतामेतन्मुसलम् ( इत्युक्त्वा मुसलमर्पयति. )

कंसः—( सहसा गृहीत्वा सुवर्णवलयालंकृतं रुधिरार्द्रं च विलोक्य ) दुर्मुख ! दुर्मुख ! कुत एतदासादितम् ?

दुर्मुखः—देव ! सहसा मुसलमानयेति देवेनाज्ञप्तेन मया रंगमंडपाद्गृहीतं द्वितीयमपि तादृशमेव तत्रास्ति.

कंसः—( स्वगतम् ) हा !! अयुतगजबलो हतः कुवलयापीडः कृष्णेन । इदानीं चाणूरमुष्टिकावेव मे वसुदेवनंदननिकंदनायावशिष्टौ.

दुर्मुखः—महाराज ! मा विचारय तावुभावपि न भविष्यत इतः परमेकस्यैवास्य प्रहारेण.

कंसः–( स्वगतम् ) दुर्निमित्तांतरमेतत् ( प्रकाशम् ) मूर्ख ! कावुभौ इतः परं न भविष्यतः ?

दुर्मुखः–ननु भणामि एकस्यैवास्य मुसलस्य प्रहारेण देवकीवसुदेवावुभावपि न भविष्यत इति । तत्प्रहर मा विलंबस्व.

कंसः–दुर्मुख ! नेदानीं प्रहरिष्यामि । चाणूरमुष्टिकयोर्वज्रकल्पमुष्टिप्रहारपरंपरापरासुतां प्राप्तौ स्वपुत्रौ विलोक्य स्वयमेव न भविष्यतः। किं प्रहारेण?। तदेनौ गृहीत्वा मल्लमंडपमानय ( इत्युक्त्वा निष्क्रांतः. )

दुर्मुखः–आर्यौ ! राजाज्ञानुसारेण त्वरितं मल्लमंडपो गंतव्यो युवाभ्याम्.

देवकी–हा ! किमतः परं भविष्यतीति वेपते मे हृदयम्.

वसुदेवः–प्रिये ! जानास्येत्र.

गोविप्रगुरुपूजायाः कर्ता कश्चिन्नरः क्वचित् ।
न दुर्गतिमवाप्नोतीत्यतो धैर्यं समाश्रय ॥

देवकी–जानाम्येव तत्सर्वं तथापि स्त्रीस्वभावसुलभेन भयेन विस्मरामि.

दुर्मुखः–किं मिथो वार्तया विलंब्यते ? न महाराजः कालक्षेपं क्षमिष्यति.

वसुदेवः–( स्वगतम् ).

समास्ति यदि गोरक्षा प्राणेभ्योपि गरीयसी।
तदा करोतु कल्याणं श्रीशः श्रीरामकृष्णयोः॥

( प्रकाशम् ) दुर्मुख ! एहि गच्छावः ( इत्युक्त्वा निष्क्रांतौ देवकीवसुदेवौ सह दुर्मुखेन ).

( ततःप्रविशत्युद्विग्नः कंसः ).

कंसः–( स्वगतम् ) हा ! ! चाणूरो मुष्टिकोरिष्टः शलस्तोशलकश्च ताभ्यां द्वाभ्यां मृत्युमुखं नीताः । किमद्य कर्तव्यम् ? ( क्षणं विचार्य ) गावो ब्राह्मणाश्च विष्णोर्मूलं तदुन्मूलनेन च विष्णोरुन्मूलनं सुकरमित्समासशिरोमणेः केशिनो मतम् । तत्प्रथमं विष्णुमूलोन्मूलनमेव कर्तव्यम् । कोस्ति भो मामकीनः ? ( इत्याह्वयति ).

श्रीकृष्णः–( प्रविश्य ) अयमहमस्मि तावकीनः ।

कंसः–( अनालोक्यैव ) हन्येतां प्रथमं रामकृष्णौ ततः परं देवकीवसुदेवौ ततः परं नंदादयो गोपा अपि नीयंतां वध्यस्थानम्.

श्रीकृष्णः–( स्वगतम् ) अहो पापप्रियता मातुलस्य मे. ( प्रकाशम् ) किमहो विस्मृत्स मूलम् । ( इत्यर्द्ध उक्ते ).

कंसः–साधु वत्स ! साधु । विस्मृतं मया मूलं विष्णोः । स-

न्यकू स्मारितं त्वया प्रथमं गावो ब्राह्मणाश्च हंतव्याः। तेन नष्टमूलवृक्षवत्स्वयमेव निर्मूलो विष्णुर्नंक्ष्यति.

श्रीकृष्णः-( स्वगतम् ) अहो ! रोषावेशविवशाशयताऽस्य यया निकटस्थितमपि मामसौ न जानाति न च मदुक्तं पूर्णं श्रृणोति ( प्रकाशम् ) ननु ब्रवीमि कथं विस्मृत्य मूलमखिलश्रेयसामहिंसां हिंसामेव श्रेयस्करीं मन्यसे ?

कंसः-( पृष्ठतो नावलोक्य ) कस्त्वमहिंसापक्षपाती परकीयोपि मदीय इव वदसि ?

श्रीकृष्णः-नाहं परकीयस्तावकीनस्तावकीनश्रेयइच्छुश्च.

कंसः-ब्रूहि सत्वरतरं मामकीनेषु कस्त्वं भो ! मृषापंडितंमन्यतया मामप्युपदेष्टुमिच्छसि ?

श्रीकृष्णः-यद्येवं तर्हि श्रूयताम् ।

कंसः-श्रूयते.

श्रीकृष्णः-

चाणूरमुष्टिकारिष्टशलतोशलकांतकृत् ।
गजस्य हंता हंताऽहं श्रीकृष्णो गोकुलप्रियः
यस्तावकीनेषु भागिनेयेष्वष्टमोस्मि.

कंसः-(सभयावेगं स्वगतम) कुतोऽत्र सप्तमेपि मंचे श्रीकृष्णस्यागमनम् ? ( प्रकाशम् ) एहि कृष्ण एहि परिष्वज-

स्व माम् ।

श्रीकृष्णः–परमेण प्रेम्णाऽऽलिंगिष्यामि तदा.

कंसः–कदा?

श्रीकृष्णः–यदा गोब्राह्मणेषु पूर्णभक्तिर्भविष्यसि.

कंसः–तर्हि परस्मिन् जन्मनीति वक्तव्यम् ।

श्रीकृष्णः–( स्वगतम् ) अहो दुराग्रहग्रहग्रस्तताऽस्य ( प्रकाशम् ) मातुल! मातुल! गोब्राह्मणभक्तिरेव श्रेयस्करी ते न तद्विरोधः ।

कंसः–जानामि त्वं खलु विष्णुरूपः । स्वमूलदृढीकरणाय प्रयतसे.

श्रीकृष्णः–मातुल! न ममैव गोब्राह्मणभक्तिर्मूलं किं तु समस्तस्य ब्रह्मांडमंडलस्यापि सैव मूलम् । ततस्त्वयाऽपि स्वमूलमिति मत्वा गोब्राह्मणभक्तिः संरक्षणीया । दूरेऽस्तु वा गोभक्तिः परं अन्यायापहृतं गवामयुतं किमर्थं पीड्यते? किंबहुना.

मम वा मम पित्रोर्वा नंदादीनां च गोदुहाम् ।
प्रतियच्छ गवां प्राणान् प्राणैरथैश्च भूपते ॥

कंसः–नैवं कदापि भविष्यति प्रथमं गवां प्राणाँस्ततो युवयोः प्राणानंतरं च देवकीवसुदेवनंदादीनां प्राणानपहरि-

ष्यामि.

श्रीकृष्णः–( स्वगतम् ) नायं सामदानभेदसाध्यस्ततोऽत्र निग्रह एव युक्तः ( प्रकाशम् ) मातुल ! मातुल ! पुनरपि प्रार्थयामि.

यदि जीवितुमिच्छा ते भोक्तुं च राज्यमुत्तमम्।
तर्हि मोचय गाः शीघ्रं न चेत्त्वं न भविष्यसि ॥

कंसः–कृष्ण ! कृष्ण ! नाहं बकी बको वा। कंसः खल्वहं शृणु ममापि प्रार्थनाम्।

यदि जीवितुमिच्छा ते भोक्तुं च सुखमुत्तमम्।
देवकीपूजितां धेनुं तर्हि सत्वरमर्पय ॥

श्रीकृष्णः–( सरोषम् ) न वयं जीवंतो यदुकुलकलंकाय गामर्पयिष्यामः।

कंसः–न वयमपि जीवंतो गा मोचयिष्यामः।

श्रीकृष्णः–इदानीं युद्धमेव नौ शरणम्।

कंसः–सज्ज एवास्ति युद्धायापि मे कालकरालः करवालः

श्रीकृष्णः–सज्जैव ममापि त्वादृशपामरपरमाणुपरिमर्दनपटीयसी चपेटा.

कंसः–तर्हि युद्धक्षमां भूमिमवतरावः।

श्रीकृष्णः–भवतु। न चरमां भवत इच्छां निवारयाम एहि

मंचादवतरावः ।

( इति निष्क्रांतौ श्रीकृष्णकंसौ. )

( ततः प्रविशतः अस्तिः प्राप्तिश्च. )

अस्तिः—हा ! प्राणनाथ क्व गतोसि ? कथं प्रतिवचनमपि प्रियतमायै न वितरसि ?

प्राप्तिः—हा ! जीवितवल्लभ ! यत्र गंतुं ते वांछा तत्रैवावामप्यागंतुमाज्ञापय.

देवकी—नाथ ! स्त्रीणां विलापः श्रूयते तेन कंपते मे हृदयम्.

वसुदेवः—अथ किम् । तत्रापि राजद्वारेऽस्मिन्समये स्त्रीविलापः किमप्यमंगलमेव निवेदयति । तथापि संधार्य धैर्यं क्षणं श्रुत्वा निश्चिनुवः ।

देवकी—यथाज्ञाऽर्यपुत्रस्य.

अस्तिः—हा यदुकुलसुधासिंधुसुधांशो ! हा ! गोब्राह्मणप्रतिपाल ! गोपालचिंतामणे ! हा ! यशोदानंदनंदन हा ! देवकीवसुदेवहृदयसर्वस्व श्रीकृष्ण ! ( इत्युक्ते. )

देवकी—हा ! हतास्मि वत्सस्य श्रीकृष्णस्यैव किमप्यसाहितं श्रूयते.

हांहावत्स ! द्विजसुरगवां क्वास्यनन्याश्रयाणां ।

